

कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य
प्रकाशनम्

# संस्कृतवाग्विलासः

## तृतीयमुद्रा

# संस्कृतवाग्विलासः

## तृतीयमुद्रा



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयस्य
प्रकाशनम्

* कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयस्य प्रकाशनम्
संस्कृतवाग्विलासः
तृतीयमुद्रा

* प्रकाशकः - कुलसचिवः
* कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयः रामटेकम्
प्रशासकीयभवनम्, मौदा मार्गः, रामटेकम् ४४१ १०६,
जि. नागपुरम् (महाराष्ट्रम्)
दूरध्वनी ०७११४ - २५५५४९
Website: www.kksanskrituni.digitaluniversity
ISBN : 978-93-85710-09-4

* मूल्य : रु. ५०/-

* प्रेरणा तथा मार्गदर्शनम्
डॉ. उमा वैद्य
कुलगुरुः, क. का. सं. वि., रामटेकम्

* प्रधानसम्पादिका
डॉ. नन्दा पुरी
विभागप्रमुखा, संस्कृतभाषा तथा साहित्यविभागः

* सम्पादकमण्डलम्
डॉ. कविता होले
डॉ. पराग जोशी
डॉ. राजेन्द्र जैन

* पाठलेखकाः
डॉ. नन्दा पुरी
डॉ. कविता होले
डॉ. पराग जोशी
डॉ. राजेन्द्र जैन

* प्रकाशनवर्षम् - २०१७



## प्रतिज्ञा

भारतः मम देशः। सर्वे भारतीयाः मम बान्धवाः। भारतदेशे अहं सर्वदा स्निह्यामि। अस्य देशस्य याः समृद्धाः विविधाश्च परम्पराः। ताः प्रति मम शिरः अभिमानेन उन्नतं भवति। तासां परम्पराणाम् अनुगमनं कर्तुम् आसादयितुं च अहं सदा प्रयतिष्ये।

अहं पितरौ गुरून् वयोज्येष्ठान् प्रति च आदरेण वर्तेय। सर्वान् प्रति सौजन्येन व्यवहरेयम्। अहं मम राष्ट्रेण देशबान्धवैश्च सह एकान्तनिष्ठम् आचरणं करोमि इति प्रतिजाने। तेषां कल्याणे समुत्कर्षे च मम आत्यन्तिकं सौख्यं विनिहितम् अस्ति।

जयतु संस्कृतम्। जयतु भारतम्।

* * *

## शुभाशंसनम्

संस्कृतस्य अध्ययनं कर्तुं येषां महती इच्छा वर्तते तेषां कृते लघुस्वरूपाणि पुस्तकानि बहूनि उपलभ्यन्ते। परन्तु संस्कृतसाहित्यस्य गद्यपद्ययोः वाङ्मयविकासे यः क्रमः दृश्यते तदनुसारं पुस्तकस्य निर्माणेन छात्राणां महान् उपकारः भवेत् इति संकल्पेन पुस्तकस्य अस्य निर्माणं कृतम्।

प्राचीनानां विदुषां गद्यपद्यशैली कथमासीत्, अर्वाचीनानाञ्च कवीनां लेखनं कथमिति ज्ञातुम्, उभयोः तुलनाञ्च विधातुं पुस्तकेऽस्मिन् प्राचीनं तथा अर्वाचीनं गद्यपद्यसाहित्यं प्रस्तावनापुरस्सरं तथा कठिणशब्दार्थबोधनपुरस्सरं स्थापितं वर्तते। एतस्य पठनेन छात्राः कालानुगुणं क्रमशः साहित्यनिर्माणे कानि परिवर्तनानि समागतानि इति ज्ञातुं प्रभवन्ति। पठनेनानेन छात्राणां रुचिः वर्धताम् इति मम शुभाशंसनम्।

एवमेव संस्कृतभाषायाः साहित्यस्य विज्ञानस्य च प्रचाराय संस्कृतपुस्तकानां निर्माणं विश्वविद्यालयद्वारा भविष्यति। एवं क्रमेण प्रकाशयिष्यमाणानां पुस्तकानां 'संस्कृतवाग्विलासः' इति सामान्यं नामकरणं कृतम्। एतेषां पुस्तकानां माध्यमेन संस्कृतवाचः विलासस्य सम्यक् ज्ञानं भवतु इति विचारः अस्य नामकरणे कारणम्। क्रमेण एकमेकं पुस्तकं 'मुद्रा' इति भविष्यति। यथा विलासस्य बहुषु प्रकारेषु सत्सु विविधाः मुद्राः अपि भवन्ति तथा संस्कृतवाग्विलासस्यापि मुद्राः पुस्तकरूपेण प्रकाशयिष्यन्ते।

पुस्तकम् इदं संस्कृतवाग्विलासस्य तृतीयमुद्रा-रूपेण प्रकाशितम्। बी.ए. विशारद (संस्कृतं) इति पाठ्यक्रमे स्थापितमिदं पुस्तकम्। आहत्य अष्टमुद्राणां रूपेण संस्कृतपुस्तकानां प्रकाशनं संकल्पितं वर्तते।

एतेषां पुस्तकानां माध्यमेन ज्ञानार्थिनः संस्कृतविषयकं संस्कृते वर्तमानं ज्ञानं प्राप्नुवन्तु। संस्कृतभाषा भारतवर्षे प्राचीनज्ञानभाषा वर्तते एव। सा लोकभाषा अपि भूत्वा लोके विराजताम् इति आशास्यते। सर्वेभ्यः ज्ञानार्थिभ्यः मम शुभकामनाः।

कुलगुरुः

* * *

## सम्पादकीयम्

'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' सुप्रसिद्धा खलु उक्तिरियम्। संस्कृतिस्तु संस्कृताश्रिता। अतः संस्कृतेः ज्ञानार्थं संस्कृतिरक्षणार्थञ्च संस्कृतस्याध्ययनं सर्वैः करणीयम्। साहित्यनिर्मितिः मानवस्य बौद्धिकीं मानसिकीञ्च प्रगतिं सूचयाति। यदा विश्वस्तरे मानवाः स्वविचारप्रकटनार्थं भाषानिर्माणेऽप्यसमर्थास्तदा भारते वेदग्रन्थानां निर्माणमभवत् । साहित्यनिर्मितेरखण्डिता परम्परा विंशत्युत्तरशतकेऽपि अक्षुण्णा दृश्यते।

बी.ए. विशारद अभ्यासक्रमस्य तृतीयवर्षस्य कृते पाठ्यपुस्तकमिदं निर्मितम्। संस्कृतसाहित्यस्याध्ययने भाषायाः साहित्यस्य च विकासः महत्त्वपूर्णः। साहित्यस्य विकासं स्वरूपञ्च दर्शयितुं पाठाः चिताः। उद्दिष्टमिदमनुलक्ष्य पदवीस्तरे वेदग्रन्थेभ्य आरभ्याधुनिककालस्य प्रज्ञाभारती डॉ. श्री. भा. वर्णेकर महोदयानां पर्यन्तं प्रातिनिधिकरूपेण पाठचयनं कृतम्।

भारतस्य आदर्शरूपां गुरूकुलशिक्षणपद्धतिं दर्शयितुं छान्दोग्योपनिषदः श्वेतकेतुकथाऽत्र स्वीकृता। सुबन्धुबाणादीनां प्रगल्भां गद्यशैलीं वासवदत्तावर्णने शुकनासोपदेशे च दृश्यते। आधुनिक गद्यपरम्परायाः स्वरूपमपि छात्राः जानन्त्विति कृत्वा अम्बिकादत्तव्यासमहोदयस्य ग्रन्थाद् गद्यांशः स्वीकृतः।

संस्कृतनाट्यपरम्परायां भट्टनारायणस्य वेणीसंहारं विशेषं महत्त्वं धारयाति। ओजःपूर्णसंवादानां कृते नाटकमिदं प्रख्यातम्। अतः अस्मान्नाटकात् नाट्यांशः स्वीकृतः। संस्कृतस्य कथावाङ्मयं विशालम्। प्राचीनकथारूपेण वेतालपञ्चविंशतिकायाः कथा तथा आधुनिक-कथावाङ्मयस्य स्वरूपं दर्शयितुं डॉ. श्री. भा. वर्णेकर महोदयानां कथा चात्र दत्ता। शास्त्रं विना साहित्याध्ययनमपूर्णम्। साहित्यशास्त्रीयतत्त्वेषु रसतत्त्वं महत्वपूर्णम्। अतः शास्त्रस्य रसाभिव्यक्तिवादः पाठरूपेण प्रदत्तः। राजनीतिज्ञा युद्धकलानिपुणा च अहिल्याबाई होळकर महोदया आदर्शभूता। सर्वेषां कृते प्रेरणादायकं तस्याश्चरित्रम्। अतः तस्याः परिचयोऽत्र प्रदत्तः।

पद्यभागे आद्य-लौकिक-काव्यरूपेण प्रख्यातं रामायणम्। वाल्मीकेः भाषासौन्दर्यं दर्शयितुं हनुमता सीतायाः प्रथमदर्शनप्रसङ्गः चितः। रामायणस्य प्रासादिकभाषया विदग्धमहाकाव्येषु प्रागल्भ्यमवधृतम्। माघस्य शिशुपालवधे दृश्यते एतादृशवैदग्ध्यम्। छात्रैरध्ययनकाले कथं वर्तितव्यमिति ज्ञापयितुं मनुस्मृतेः ब्रह्मचारिधर्मः स्वीकृतः। कालिदासं विना संस्कृतसाहित्यमपूर्णम्। निसर्गवर्णने कालिदासस्य प्रतिभा नित्यनूतनं रूपं धारयति। तद्रूपं वसन्तवर्णने द्रष्टुं शक्यते। भक्तियुक्तरसकाव्यस्योदाहरणं गीतगोविन्दम्। अद्वैतवेदान्तस्य प्रवर्तकानामाद्यशङ्कराचार्याणां सुमधुरां नादमयीं भाषां सौन्दर्यलहरीकाव्यस्य पठनेनानुभवामः। आधुनिककाव्येषु गुलाबरावमहाराजस्य प्रियप्रेमोन्मादः कृष्ण श्री अर्जुनवाडकरमहोदयस्य विडम्बनकाव्यञ्च स्वीकृतम्। जगन्नाथपण्डितस्य गङ्गास्तवं सुप्रसिद्धम्। शिखरिणीबद्धं काव्यमिदं स्तोत्रवाङ्मयस्य अमूल्यं रत्नम्। पुराणवाङ्मयेष्वपि शास्त्रचर्चा दृश्यते इत्यग्निपुराण्यस्याध्ययनेन ज्ञायते। अग्निपुराणात्काव्यभेदनिरूपणं स्वीकृतम्। एवं गद्यसाहित्यस्य पद्यसाहित्यस्य च स्वरूपं दर्शयितुमत्र प्रयत्नः कृतः। अस्य पुस्तकस्य माध्यमेन संस्कृतसाहित्यस्य परिचयो भवतु संस्कृताध्ययने रूचिवर्धनञ्च भवत्वित्याशास्महे।

**डॉ. नंदा पुरी**

***

## विषयानुक्रमणिका

# गद्यविभागः

## १. श्वेतकेतुकथा

**प्रस्तावना-**

उपनिषद्वाङ्मयं विश्वेऽस्मिन् तत्त्वज्ञानग्रन्थेषु विशेषं महत्त्वं धारयति। उप+नि+सद् धातोर्व्युत्पन्नोऽयं शब्दः। अज्ञाननाशकं मोक्षप्रदायकञ्च ज्ञानमित्यस्योपनिषद्शब्दस्यार्थः। गुरोः समीपमुपविश्य ज्ञानग्रहणमित्यप्यस्य शब्दस्यार्थः। लौकिकज्ञानादात्मज्ञानं महत्त्वपूर्णम्। तेनैव ज्ञानेन अमृततुल्य-मखण्डानन्दं प्राप्तुं शक्यते। अतः सर्वेषु उपनिषद्ग्रन्थेषु मोक्षप्रदज्ञानस्य विस्तृतचर्चा ऋषिभिः कृता। सामवेदस्य छान्दोग्योपनिष-द्यप्यात्मज्ञानस्य विवरणं कृतमस्ति।

श्वेतकेतुकथा छान्दोग्यापनिषदः षष्ठाध्यायात्स्वीकृता। अस्यां कथायां तत्त्वमसीत्यस्य महावाक्यस्य विवरणं विविधव्यावहारिकोदाहरणैः सरलपद्धत्या कृतमस्ति। उपनिषत्कालीना गुरुशिष्यपरम्परा, आदर्शशिक्षण-पद्धतिश्चात्र वर्णिता। आरुणिपुत्रः श्वेतकेतुः द्वादशवर्षाणि गुरुगृहे उषित्वा ज्ञानेनाहङ्कारी भूत्वा प्रत्यागतः। ब्रह्मज्ञानिना तस्य पित्रा तत्त्वमसि महाकाव्यस्य विवरणं व्यावहारिकोदाहारणैरत्र कृतम्।

---

श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम् न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिवभवतीति। स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनुचानमानी स्तब्ध एयाय । तं ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः। येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति। कथं नु भगवः स आदेशो भवतीति। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम्। यथा सौम्येकेन नखनिकृन्तनेन सर्व कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवं स आदेशोभवतीति। न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवांस्त्वैवमेतद् ब्रवीत्विति तथा सोम्येति होवाच।

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत। कुतस्तु खलु सोम्यैवं स्यादिति

होवाच कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत। तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत। तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्ते। ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त। तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तद्ध्यन्नाद्यं जायते।

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति। सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणिति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकमकरोद्यथा तु खलु सोम्येमास्तिस्रो देवता स्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति।

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मासं योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यस्तल्लोहितं योऽणिष्ठ स प्राणः। तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्। अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयीवागिति भूय एव मा भगवन्विज्ञापयत्विति तथा सोम्येति होवाच।

दध्नः सोम्य मथ्यामानस्य योऽणिमा स ऊर्ध्वः समुदीषति-सत्सर्पिर्भवति। एवमेव खलु सोम्यात्रस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति। अपां सोम्य पीयमानानां योऽणिमा वाग्भवति। अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागितिभूय एव मा भगवन्विज्ञापयत्विति तथा सोम्येति होवाच।

षोडशकलः सोम्य पुरुषः पचदशाहनि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत इति। स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूंषि सामानीति तं होवाच न वै मा प्रतिभान्ति भो इति॥ तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति॥३॥ स हाशाथ हैनमुपससाद तं ह यत्किं च पप्रच्छ सर्वं ह प्रतिपेदे॥४॥ तं होवाच



यथासोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेत्॥५॥ एवं सोम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्सान्नेनोपसमाहिता प्राज्वली तयैतर्हि वेदाननुभवस्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति॥६॥

न्यग्रोधफलमत आहरेतीदं भगव इति भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति॥१॥ तं होवाच यं वै सोम्यैतमणिमानं न निभालयसे एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति॥२॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच॥३॥

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति सह तथा चकार तं होवाच यद्दोषा लवणमुदकेऽत्वाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद॥१॥ यथा विलीनमेवाङ्गस्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथ इति तद्ध तथा चकार तच्छश्वत्संवर्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति॥२॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथासोम्येति होवाच।

***

**कठिनशब्दार्थाः**

१. वस ब्रह्मचर्यम् - वेदाध्ययनस्य कृते गुरुगुहे ब्रह्मचर्येण वस्तव्यम्। अष्टमे वर्षे उपनयनं कृत्वा वेदाध्ययनस्य प्रारम्भः करणीयः।

२. अननूच्य -न अनूच्य इति अननूच्य। ल्यबन्तमव्ययम्। वेदाध्ययनमकृत्वा

३. ब्रह्मबन्धुरिव - यस्य वेदाध्यनं नाभवत्। केवलं जात्या ब्राह्मणः।

४. अनुचानमानी - पन्डितंमन्यः।

५. स्तब्धः - गर्विष्ठः।

६. अप्राक्ष्यः - प्रच्छ् आर्षरूपम पृष्टमित्यर्थः।

७. वाचारम्भणम् - केवलं वाग्व्यवहारः न परमार्थतः।

८. त्रिवृत्करणम् - तेजः जलमन्नञ्च एताभ्यः त्रिधा उत्पत्तिर्जाता। आण्डजं जीवजमुद्भिज्यञ्च। इमा तिस्रो: देवताः त्रिवृत् त्रिवुदेकैका भवति।

९. विजानीहि - वि + ज्ञा आज्ञार्थी रूपं मध्यमपुरुषः एकवचनम्।

१०. अशीः - अश्, आज्ञार्थीरूपं, मध्यमपुरुषः एकवचनम् माअव्ययेन सह अस्य प्रयोगः क्रियते। मा खाद् इत्यर्थः।

११. उपससाद- उप + सद्आज्ञार्थी रूपं मध्यमपुरुषः एकवचनम् समीपमागच्छ इत्यर्थः।

****



# २. शुकनासोपदेशः

**प्रस्तावना**

गद्यकवेः बाणभट्टस्य 'कादम्बरी' इत्याख्यग्रन्थात् समुद्धृतोऽयं पाठः। बाणभट्टः वात्सायनवंशे जन्म गृहीतवान्। अस्य समयः सप्तमशतकमिति स्वीक्रियते। बाणभट्टस्य पिता चित्रभानुः, माता च राज्यदेवी आसीत्। बाणभट्टेन हर्षचरितनामके स्वीये ग्रन्थे स्ववंशस्य समग्रः परिचयः प्रदत्तः। श्रीहर्षनृपतेः राजसभायां सः स्वगुणगणपरिचयेन नृपतिमतोषयत्। बाणभट्टेन ग्रन्थद्वयं गद्यमयं प्रणीतम् - हर्षचरितं, कादम्बरी चेति। बाणभट्टस्य 'कादम्बरी' कथाग्रन्थः। स्वयमेव कविना 'धिया निबद्धेयमतिद्वयी कथा' इति कादम्बर्याः कथाग्रन्थत्वमुक्तम्। कादम्बर्यामुक्ता कथा गुणाढ्यकृतायाः बृहत्कथायाः गृहीता। कादम्बर्याः कथा जन्मत्रयवृत्तान्त-मङ्गीकरोति। उज्जयिन्यां तारापीडो नाम राजाऽऽसीत्, तस्य स्त्री विलासवती, शुकनासश्चामात्यः। प्रौढे वयसि नृपस्य पुत्रः चन्द्रापीडो जातः। तस्मै राजपुत्राय चन्द्रापीडाय यथोचितमुपदिष्टवान् शुकनासः। स एव उपदेशः शुकनासोपदेश इति प्रसिद्धः। तारुण्यं, लक्ष्मीमदः, राज्यमित्यादिविषयाणां यथोचितमुपयोगाय कृतोऽयमुपदेशः। शुकनासोपदेशमधीत्य हृदयं निर्मलदर्पणतां गच्छतीति निश्चप्रचम्।

---

तात! चन्द्रापीड ! विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति! केवलञ्च निसर्गत एव अभानुभेद्यमरत्नालोकच्छेद्य मप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अपरिणामोपशमो दारुणो लक्ष्मीमदः। कष्टमनञ्जनवर्तिसाध्यमपरम् ऐश्वर्यतिमिरान्धत्वम्। अशिशिरोपचारहार्योऽतितीव्रः दर्पदाहज्वरोष्मा। सततममूलमन्त्रशम्यः विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचबाध्यः बलवान् रागमलावलेपः। अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवति, इत्यतः विस्तरेणाभिधीयसे।

गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा । सर्वाविनयानामेकैकमप्येषामायतनम्, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः।अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरम् आत्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका,

नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनानि उपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेन उपदेशगुणाः।

गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्काभरणमाननशोभासमुदयमधिकतरमुपजनयति । हरति च सकलम् अतिमलिनमप्यन्धकारमिव दोषजातं प्रदोषसमये निशाकर इव। गुरूपदेशः प्रशमहेतुर्वयः परिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन् गुणरूपेण तदेव परिणमयति। अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशरप्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम्। अकारणश्च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य । चन्दनप्रभवो न दहति किमनलः? किं वा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा? गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं गुरूकरणम्, असुवर्णविरचनमग्राम्यं कर्णाभरणम्, अतीतज्योतिरालोकनोद्वेगकरः प्रजागरः। विशेषेण राज्ञाम् । विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न श्रृण्वन्ति श्रृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्।

***

**कठिनशब्दार्थाः**

| | |
|---|---|
| १. तमः - अन्धकारः। | २. प्रभा - कान्तिः। |
| ३. दारुणः - भयङ्करः। | ४. उपशमः - शान्तिः। |
| ५. अशिशिरम् - उष्णम् | ६. दर्पः - अहङ्कारः। |
| ७. उष्मा - तापः। | ८. शौचम् - शुद्धिः। |
| ९. आयतनम् - आस्थानम्। | १०. गभस्तयः - किरणानि। |
| ११. अमलम् - निर्मलम्। | १२. प्रकृतिः - स्वभावः। |

***



## ३. वासवदत्तासौन्दर्यवर्णनम्

**प्रस्तावना**

प्रस्तुतं गद्यं महाकवेः सुबन्धुविरचितात् वासवदत्ता इति संस्कृतकाव्यात् सङ्ग्रहीतं वर्तते। काव्यमिदं आख्यायिका-गद्यकाव्यरूपेण प्रसिद्धं वर्तते। वासवदत्तेति नायिका काव्येऽस्मिन् कविकल्पनाद्भुतशक्त्या नितरां सुवर्णिता वर्तते।

---

अथ स कदाचिदवसन्नायां यामवत्यां...। दशनरत्नतुलादण्डेनेव, नयनामृतसिन्धुसेतुबन्धेनेव, यौवनमन्मथमत्तवारणयोरण्डकेनेव नासावंशेन परिष्कृताम्। तुलाकोटिप्रतिष्ठिताम्, सुयोधनधृतिमिव कर्णविश्रान्तलोचनाम्, वामनलीलामिव दर्शितवलिविभङ्गाम्, वृश्चिकराशिरिवस्थितिमिव अतिक्रान्तकन्यातुलाम्, उषामिव अनिरुद्धदर्शनसुखाम्, शचीमिव नन्दनेक्षणरुचिम्, पशुपतिताण्डवलीलामिव उल्लसच्चक्षुःश्रवसम्, विन्ध्याटवीमिव उत्तुङ्गश्यामलकुचाम्, वानरसेनामिव सुग्रीवाङ्गदशोभिताम्, भास्वताऽलङ्कारेण, श्वेतरोचिषा स्मितेन, लोहितेनाधरेण सौम्येन दर्शनेन गुरुणा नितम्बबिम्बेन, सितेन हारेण, शनैश्चरेण पादेन, तमसा केशपाशेन, विकचेन लोचनोत्पलेन, ग्रहमयीमिव, संसारभित्तिचित्रलेखामिव त्रैलोक्यचित्तरङ्गस्य, रसायनसमृद्धिमिव यौवनमहायोगिनः, सङ्कल्पसिद्धिमिव शृङ्गारस्य, निधानमिव कौतुकस्य, विजयपताकामिव मकरध्वजस्य, आजिभूमिमिव मदनस्य संकेतभूमिमिव लावण्यस्य, विहारस्थलीमिव सौन्दर्यस्य, एकायतनशालामिव सौभाग्यस्य उत्पत्तिस्थानमिव कान्तेः, स्तम्भनचूर्णमिव इन्द्रियाणाम्, आकर्षणमन्त्रसिद्धिमिव मनसः, चक्षुर्बन्धनमहौषधिमिव मन्मथेन्द्रजालिनः त्रिभुवनविलोभनसृष्टिमिव प्रजापतेः, अष्टादशवर्षदेशीयां कन्यामपश्यत् स्वप्ने।

अथ तां प्रीतिविस्फारितेन चक्षुषा पिबन्निव जनितेर्ष्ययेव निद्रया चिरसेवितया स मुमुचे। अथ प्रबुद्धस्तु विषसरसीव दुर्जनवचसीव निमग्नमात्मानमवधारयितुं न शशाक। तथाहि-निर्लक्षमाकाशतले आलिङ्गनार्थं प्रसारितबाहुयुगुलः, एह्येहि प्रियतमे ! मा गच्छ, मा गच्छे'ति दिक्षु विदिक्षु च विलिखितामिव, उत्कीर्णामिव चक्षुषि, निखातामिव हृदये प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले निलीनो निषिद्धाशेषपरिजनो दत्तकपाटः

परिहृतताम्बूलादिसकलोपभोगस्तं दिवसमनयत्। तथैव निशामपि स्वप्नसमागमेच्छया कथमप्यनैषीत्।

***

**कठिनशब्दार्थाः**

१. यामवत्याम् - रात्रौ।

२. मन्मथः - मदनः।

३. दशनरत्नम् - दन्तरत्नम्।

४. पशुपतिताण्डवलीला - शिवनृत्यविलासः।

५. मकरध्वजः - कामः मदनो वा।

६. अष्टादशवर्षदेशीयाम् - ईषदूनाष्टादशवर्षाम्।

***



## ४. वीरव्रतम्

**प्रस्तावना**

अर्वाचीनसंस्कृतवाङ्मये नवोदितेन महाकविना अम्बिकादत्तव्यासेन रचितात् 'शिवराजविजयः' इति गद्यग्रन्थात् स्वीकृतः अयं पाठः। 'गद्यं कवीनां निकषं वदन्ति' इति सूक्त्यनुसारं संस्कृतवाङ्मये गद्यकाव्यानि विरलानि एव। तत्राऽपि अर्वाचीनकाले गद्यलेखनं न तथा प्रमाणेन उपलभ्यते। अर्वाचीनकाले लिखितेषु गद्यकाव्येषु विशिष्टं गद्यकाव्यं वर्तते शिवराजविजयः। अर्वाचीनोऽपि अयं कविः प्राचीनां लेखनशैलीमनुसरन् अतीवप्रौढतया ग्रन्थमिममरचयत्। विंशतिशताब्दी जातेन अनेन कविना महाराष्ट्रे जातस्य छत्रपतेः शिवाजीमहाराजस्य चरितं गद्यकाव्येऽस्मिन् वर्णितम्। महाकवेः बाणभट्टस्य गद्यशैली अस्य लेखने प्रतिबिम्बिता इव दृश्यते। स्वराज्यसंस्थापकस्य छत्रपतेः शिवरायस्य ओजस्विस्फूर्तिप्रदायकं चरित्रं गद्यरूपेण अत्र प्रस्तुतम्। एतस्य प्रसिद्धस्य गद्यकाव्यस्य प्रथमनिःश्वासे अफजलखानस्य यः वृत्तान्तः वर्णितः तद्विषयकोऽयं पाठः।

---

ततः शनैः शनैर्निर्यातिष्वपरिचितजनेषु, संवृत्ते च निर्मक्षिके मुनिर्गौरबटुमाहूय, विजयपुराधीशाऽऽज्ञया शिववीरेण सह योद्धुं ससैन्यं प्रस्थितस्य अपजलखानस्य विषये यावत् किमपि प्रष्टुमियेष तावत्पादचारध्वनिमिव कस्याप्यश्रौषीत्। तमवधार्याऽन्यमनस्के इव मुनौ गौरबटुरपि तेनैव ध्वनिना कर्णयोः कृष्ट इव समुत्थाय, निपुणं परितो निरीक्ष्य, पर्य्यट्य, 'कोऽयम्?' इति च साम्रेडं व्याहृत्य, कमप्यनवलोक्य, पुनर्निवृत्य, 'मन्ये मार्जारः कोऽपि' इति मन्दं गुरवे निवेद्य, पुनस्तथैवोपविवेश। मुनिश्च मा स्म कश्चिदितरः श्रौषीदिति सशङ्कं क्षणं विरम्य पुनरुपन्यस्तुमारेभे -

''वत्स गौरसिंह ! अहमत्यन्तं तुष्यामि त्वयि, यत्त्वमेकाकी अपजलखानस्य त्रीनश्वान्, तेन दासीकृतान् पञ्च ब्राह्मणतनयांश्च मोचयित्वाऽऽनीतवानसीति। कथं न भवेरीदृशः? कुलमेवेदृशं राजपुत्रदेशीय-क्षत्रियाणाम्।'' तावद् पुनरश्रूयत मर्मरः पादक्षेपस्य। ततो विरम्य, मुनिः स्वयमुत्थाय, प्रोन्नतं शिलापीठमेकमारुह्य, निपुणतया परितः पश्यन्नपि कारणं किमपि नालोकयामास चरणाक्षेपशब्दस्य। अतः पुनरेकतानेन निपुणं

निरीक्षमाणेन गौरसिंहेन दृष्टं, यत् कुटीर-निकटस्थ-निष्कुटक-कदलीकूटे द्वित्रास्तरवोऽतितरां कम्पन्त इति। तदेव संशयस्थानमित्यङ्गुल्या निर्दिश्य, कुटीरवलीके गोपयित्वा स्थापितानामसीनामेकमाकृष्य, रिक्तहस्तेनैव मुनिना पृष्ठतोऽनुगम्यमानः कपोलतलविलम्बमानान् चक्षुश्चुम्बिनः कुटिलकचान् वामकराङ्गुलिभिरपसारयन् मुनिवेषोऽपि किञ्चित् कोपकषायितनयनः, करकम्पितकृपाकृपणकृपाणः महादेवमारिराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररसद्वयस्नातः सपदि समागतवांस्तन्निकटे, अपश्यच्च लताप्रतानवितानवेष्टितरम्भास्तम्भत्रितयस्य मध्ये नीलवस्त्रखण्डवेष्टितमूर्द्धानं, हरितकञ्चुकं, श्यामवसनावनद्धकटितट- कर्बुराधोवसनं। काकासनेनोपविष्टं, रम्भालवाललग्नाधोमुखखड्गत्सरुन्यस्तविपर्यस्तहस्तयुगलं, लशुनगन्धिभि-र्निश्वासैः कदलीकिसलयानि मलिनयन्तं, नवाङ्कुरितश्मश्रुश्रेणिच्छलेन कन्यकापहरणपङ्ककलङ्कपङ्कलङ्किताननम्, विंशतिवर्षकल्पं, यवनयुवक-मेकम्। ततः परस्परं चाक्षुषे संपन्ने दृष्टोऽहमिति निश्चित्य, उत्प्लुत्य, कोषात् कृपाणमाकृष्य, युयुत्सुः सोऽपि सम्मुखवतस्थे। ततस्तयोरेवं संजाताः परस्परमालापाः।

**गौरसिंहः** - कुतो रे यवनकुलकलङ्क !

**यवनयुवकः** - आः ! वयमपि कुत इति प्रष्टव्याः ? भारतीयकन्दरिकन्दरेष्वपि वयं विचरामः।

**गौरसिंह** - (सक्रोधं विहस्य) वयमपि तु स्वाङ्कागतसत्त्ववृत्तयः शिवस्य गणा अत्रैव निवसामः, तत्सुप्रभातमद्य, स्वयमेव त्वं दीर्घदावदहने पतङ्गायितोऽसि।

**यवनयुवकः** - अरे, रे, वाचालाः। ह्यो रात्रौ युष्मत्कुटीरे रुदती समायातां ब्राह्मणतनयां सपदि प्रयच्छत। तत्कदाचिद् दयया जीवतोऽपि त्यजेयम् अन्यथा मदसिभुजङ्गिन्या दष्टाः क्षणात् कथावशेषाः संवर्त्स्यथ।

कलकलमेतमाकर्ण्य श्यामबटुरपि कन्यासमीपादुत्थाय दृष्ट्वा च हन्तुमेतं यवनवराकं पर्याप्तोऽयं गौरसिंह इति मा स्म गमदन्योऽपि कश्चित् कन्यकामपजिहीर्षुरिति वलीकादेकं विकटखड्गमाकृष्य त्सरौ गृहीत्वा कन्यकां रक्षन्, तदध्युषित कुटीरनिकट एव तस्थौ।



गौरसिंहस्तु 'कुटीरान्तः कन्यकाऽस्ति, सा च यवनवधव्यसनिनि मयि जीवति न शक्या द्रष्टुमपि, किं नाम स्प्रष्टुम्? तद् यावत्तव कवोष्णशोणिततृषित एष चन्द्रहासो न चलति, तावत् कूर्दनं वा, उत्फालं वा यच्चिकीर्षसि तद्विधेहि इत्युक्त्वा व्यालीढमर्यादया सज्जः समतिष्ठत।

ततो गौरसिंहो दक्षिणान् वामांश्च परश्शतान् कृपाणमार्गानङ्गीकृतवतः दिनकरकरस्पर्शचतुर्गुणीकृतचाकचक्यैः चञ्चच्चन्द्रहासचमत्कारैश्चक्षूंषि मुष्णतः, यवनयुवकहतकस्य, केनाप्यनुपलक्षितोद्योगः, अकस्मादेव स्वासिना कलितक्लेदसञ्जातस्वेदजलजालं, विशिथिलकचकुलमालं, भग्नभ्रूभयानक-भालं शिरश्चिच्छेद।

अथ मुनिरपि दाडिमकुसुमास्तरणाच्छन्नयामिव गाढरुधिरदिग्धायां ज्वलदङ्गाररचितायां चितायामिव वसुधायां शयानं वियुज्यमानभारतभुव मालिङ्गन्तमिव, निर्जीवीभवदङ्गबन्धचालनपरं, शोणितसंघातव्याजेनान्तः स्थितरजोराशिमिवोद्गिरन्तं कलितसायन्तनघनाऽऽम्बरविभ्रमं, सततताम्रचूड - भक्षणपातकेनेव ताम्रीकृतं, छिन्नकन्धरं यवनहतकमवलोक्य सहर्षं, ससाधुवादं सरोमोद्गमं च गौरसिंहमाश्लिष्य, भ्रूभङ्गमात्राज्ञप्तेन मृतककञ्चुककटि -बन्धोष्णीशादिकमन्विष्याऽऽनीतं पत्रमेकमादाय सगणः स्वकुटीरं प्रविवेश।

***

**कठिनशब्दार्थाः**

| | |
|---|---|
| १. तनयः - पुत्रः। | २. मर्मरः - ध्वनिः। |
| ३. कञ्चुकं - वस्त्रम्। | ४. वसनं -वस्त्रम्। |
| ५. युयुत्सा - युद्धस्य इच्छा। | ६. लाङ्गूलं - पुच्छम्। |
| ७. आखेटः - मृगया। | ८. पतङ्गः - कीटः। |
| ९. कचाः - केशाः। | १०. शोणितं - रक्तं। |
| ११. आश्लिष्य - आलिङ्ग्य। | १२. आदाय - स्वीकृत्य। |
| १३. व्याजेन - निमित्तेन। | |

***

## ५. युवराज्यावाप्तिः

**प्रस्तावना**

अर्वाचीनचम्पूकाव्येषु अन्यतमः चम्पूकाव्यग्रन्थः वर्तते 'राधामाधव-विलासचम्पू'काव्यस्यास्य हस्तलिखितं महाराष्ट्रराज्यस्य 'चिंचवड' इति ग्रामे 'विष्णुपन्त रबडे' नामकस्य गृहस्थस्य गृहे प्राप्तमासीत्। अस्य चम्पूकाव्यस्य रचयिता अस्ति 'जयराम पिण्ड्ये' नामधेयः कविः। व्युत्पन्नोऽयं कविः 'बाजीराव बल्लाळ' तथा 'बाजीराव' इति द्वयोः पेशवानामकराज्यपरम्परायामासीदिति उल्लेखः काव्ये प्राप्यते। ई. स. १६५० काले काव्यमिदं प्रणीतम्। 'जयराम पिण्ड्ये' जामदग्निवत्सगोत्रे उत्पन्नः। तस्य मातुः नाम 'गंगाबा' पिता च 'गम्भीरराव' आसीत्। काव्ये अस्मिन् आहत्य दश उल्लासाः सन्ति। येषु प्रथमपञ्चसु उल्लासेषु राधाकृष्णयोः विलासवर्णनं कृतम्, अग्रिमोल्लासेषु शहाजीमहाराजस्य चरित्रवर्णनं च कृतमस्ति। न केवलं नीरसम् ऐतिहासिकं वर्णनमत्र विद्यते अपितु राधाकृष्णयोः विलासवर्णने कविना उत्प्रेक्षादि-अलङ्काराणामुपयोगेने स्ववाणी अलङ्कृता। अत्रैव नवमोल्लासे वर्णितः युवराज्यावाप्तिरित्ययं पाठः।

---

ततः कतिपयदिवसैर्युवराज्यराज्यभारार्णवनौकर्णधारो वसिष्ठ इव वसिष्ठकर्मानुष्ठानवरिष्ठो व्यास इव वेदवर्णविवरणनिपुणो वाल्मीकिरिव कविकर्मानन्दितहृदयः सकलशास्त्रार्थतत्वज्ञानसंपन्नो विपन्नजनाभयदान-विहितकारुण्योग्रणीरग्निहोत्रकुशलानांपरदारपरद्रव्यपरद्राहेपराङ्गख इति पवित्रतया गंगयाप्याधारभूतयावृत इत्याधाराधेययोरभेदे गंगाधर इति विख्यातनामधेयोमात्यो बभूव। तेन कदाचित् श्रीमच्छिवरायवदनारविंदा-देतदीयराजदर्शनादिप्रसंगमाकर्ण्य तूर्णं मद्दर्शनायानेय इत्यवादीत्। ततस्तैः कारितदर्शनः स कविर्नवीनामात्यपदवीगरीयसस्तस्य मुद्रामवलोक्य श्लोकेनैकेन वर्णयामास। यथा।

**महाराजार्णवोत्पन्न एकः पूर्णकलाधरः।।**

**मौलौ गंगाधरस्यैव श्रीभरो यस्य राजते।।२६६।।**

ततः स सचिववरस्तदुत्तमश्लोकस्य स्वकीयसमुद्रवलयांकित-वसुंधराशासनमुद्रामासनायोपकल्पयामास। ततस्तद्गंगाधरपंडितवरस्य तस्मिन् कवीश्वरे भूयान् पक्षपातः समजायत। ततः कतिपयदिवसैश्चंद्रग्रहणसमये



तेनैकराजेन द्विजराजाय गजराजो दानजललुलितकरो दानजललुतिकरेणादायि तद्वर्णयति कविः।

**उदयाचलराहुनाशिते द्विजराजे यशसा विराजितः।।**

**अकरोदपरं गजोपरि द्विजराजं भुवनैकभूपतिः।।२६७।।**

ततः कतिपयदिवसैस्तेन युवराजधुरंधरेणाभिनवकालिदासकविता-लालित्यशालिधारापरिवृढापरावतारेण देशभाषाश्लेषकाव्यलक्षणभाषण-विचक्षणेन प्रचंडपंडितमंडलीपुंडरीकचंडभानुना द्वादशभाषाविरचित राधामाधवविलासुशुश्रूषुणा स कविर्बहुमानपुरः सरमाहूय सरसहासरस दरविकसितवदनारविंदं स प्रबंधः श्रवणपथातिथितां नीतः। ततः केनचित् कविना नृपसन्निधौ प्राचीनमेवैकं पद्यमपाठि।

**गुरुरेकः कविरेकः सदसि मघोनः कलाधरोप्येकः।**

**अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे।।२६८।।**

तत्रानेन कविनोत्तरार्द्धमेवं विधाय कृष्णभट्टविदूषकमुखेन स युवराजः श्रावितः। यथा -

**अद्भुतमत्र सभायामेते बहवः क्षमापतिस्त्वेकः ।।२६९।।**

ततः कस्मिंश्चिदिवसे बघेलनृपतेः कवीश्वरवरेण राजसन्निधौ स्वकीयनरपते -रौदार्यमैवमुदीर्णम्।

**अघे लघुतरारंभो बघेलमुपसर्पति।**

**पुत्रवान् धनवांश्चैव जायते चारुजस्तथा।।२७०।।**

**अत्रानेन कविनोत्तरार्द्धयमकम्।। . . . . . . . . ।। २७१।।**

ततस्तस्मै सकलकविकुलश्लाघनीयाय स्वकीयकर्णभूषणादिनानालंकार वस्त्रभूषिताय पारितोषिकव्याजेन एकमेवाद्वितीयं ब्रह्मेति उपासनया एकोजनार्दनपंडितमिवानुकुर्वाणं हरिहरभेदभावनाराहिततया हरिहर-दिवसोपवासनिरंतरं हरिहरकथाश्रवणान्नदानविख्यातवैभवं मनोहरशरीर-विभवतया नारायणतनुसंभवमादधानं जनार्दनपंडितं प्रतिवर्षं वराहशतसहस्रकं देयमित्यादिदेश। ततः कतिपयदिवसैः सवाईमहाराजेति तं युवराजधुरंधरं पितुरप्यधिकतरं वसुंधरायां जयंतं जनकमिव जनकस्य जनपदपालकं जनो

जानाति स्म। स कविस्तेन राज्ञा स्वकीयाज्ञापालनप्रतिज्ञाशालिने दिनमणिमणिरिव रमणीयगुणविशेषतया सकलजनकरग्रहणकुशलाय द्विजराजकार्यकोविदतया निजपरिपोषककमलाकरकोशीकरणनिपुणाय उत्तमकर्मानुष्ठानजनितयशोधनलुब्धाय यशवंतरायनाम्ने राजकार्याकार्यकर-जनकर्मनिरीक्षणविचक्षणाय मंत्रिमुख्यायैवमाख्यातं। अयं कवीश्वरः सर्वविषये समृद्धिभाग् भवति तथा भवद्भिर्भवितव्यम्॥

॥ श्रीः ॥

इति श्रीमज्जयरामकविविरचिते राधामाधवविलासे युवराज्यावाप्तिर्नाम नवमोल्लासः॥९॥

***

**कठिनशब्दार्थाः**

१. अग्रणी - श्रेष्ठः
२. अग्निहोत्रं - यज्ञः
३. ईहा - इच्छा
४. तूर्णं - झटिति
५. कलाधरः - चन्द्रः
६. मौलिः - शिरः
७. दानजलं - मदजलं
८. क्षमापतिः - राजा
९. कोविदः - पण्डितः।

***



## ६. रसाभिव्यक्तिवादः

**प्रस्तावना-**

काव्यस्य आत्मतत्त्वं रसो भवतीति नाट्यशास्त्रकर्तुः भरतमुनेः वचनम्। तदनुगुणं निरूपितस्य विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति रससूत्रस्य आधारेण श्रीमता आचार्याभिनवगुप्तपादेन लिखितायाः व्याख्यायाः अयं भागः। अस्य व्याख्याभागस्य निरूपणं काव्यप्रकाशकर्त्रा आचार्यमम्मटेन काव्यप्रकाशे विहितम्। ततोऽयं पाठः संकलितः। काव्यरसस्य निरूपणं तदत्र निरूपितं वर्तते।

---

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादि-शब्दव्यावहार्य्यैर्ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते, न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते, इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्काल-विगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणः, विभावादिजीविताविधिः, पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत्सर्वमिव तिरोदधद्, ब्रह्मास्वादमिवानुभावयन्, अलौकिक-चमत्कारकारी शृङ्गारादिको रसः।

***

**कठिनशब्दार्थाः**

१. विभावनादिव्यापारः - विभाव-अनुभाव-व्यभिचारिभावानां व्यापारः।
२. अभिव्यक्तः - व्यञ्जनया व्यङ्क्तः।
३. स्थायिभावः - अनादिकालतः वासनात्मतया स्थितः भावः।
४. सहृदयः - सामाजिकः।

***

# ७. पुण्यश्लोकरूपा अहिल्यादेवी होळकर

**प्रस्तावना-**

राजनीतिज्ञेषु युद्धकलायां निपुणेषु चात्यल्पाः स्त्रियः परिगण्यन्ते। भारतीयेतिहासे सन्ति काश्चन महिलाः या कर्तुत्वशालिन्यः राजनीतिनिपुणाः रणरागिण्यश्च। तासु कालपटले मुद्राङ्कितनामा अहिल्याबाई होळकर महाभागा। व्यसनझञ्झावातेऽपि मेरुरिव स्थिरपदा प्रजारञ्जने मातृवत्सला, रणाङ्गणे कालीव धृतखड्गा स्वकर्तुत्वेन चिरस्मरणीया पुण्यश्लोक- नृपेषूल्लिखितनामा अहिल्याबाई होळकर महोदया आदर्शभूता। तस्याः कर्तृत्वस्य किञ्चित्परिचयोऽत्र प्रदत्तः।

---

ख्रिस्ताब्दस्य १७२५ तमे वर्षे मराठवाडा विभागस्य बीड जनपदस्य चौंडी ग्रामे जाता अहिल्यादेवी माणकोजी तथा सुशीलाबाई एतयोरपत्यमेतद्। धर्मपरायणस्य पितुः गृहे पुराणादिग्रन्थानां पठनं सा भक्तिपूर्णमनसा क्रियते स्म। तेन गृहे एव ज्ञानार्जनं कृत्वा अहिल्याबाई ज्ञानसम्पन्ना जाता। कुशाग्रबुद्धिः, सात्विकता, धर्मपरायणता, चेतैर्गुणैः अहिल्याबाई तेजस्विनी सञ्जाता।

वयसः अष्टमे वर्षे एव मल्हारराव होळकर महोदयस्य पुत्रेण खंडेराव महोदयेन सह विवाहबन्धने सा बद्धा। दौर्भाग्यात् सः कर्तव्यशून्यः कलहप्रियश्चासीत्। तथापि सा नोद्विग्ना जाता। प्रसन्नमनसा पतिधर्मपालनं तया कृतम्। मम पुत्रस्तु राज्यभारं वोढुमक्षमः परन्तु मम स्नुषा बुद्धिमती धैर्यशालिनीति विचिन्त्य मल्हाररावमहोदयेन सा शिक्षिता। राजकारणे प्रजापालने युद्धशिक्षणे च सा पारङ्गता। मल्हाररावमहोदयस्यानुपस्थितौ अहिल्याबाई निपुणतया राज्यभारं वहति स्म।

अहिल्यायाः जीवने कानिचन वर्षाण्येव सानन्ददायकान्यासान्। विवाहानन्तरं द्वादशवर्षानन्तरं तया पुत्रसुखमवाप्तम्। मालेराव इति तस्य नामकरणं कृतम्। मुक्ताबाई च कन्यारत्नरूपेण प्राप्ता। मातृत्वे जीवनस्य सार्थकतेति मन्यमाना सा अपत्यजन्मना हर्षातिरेकेण आनन्दतुन्दिला जाता। परमल्पकालिकेयमानन्दस्यानुभूतिः।

दिल्लीनगरे स्थिते शहा आलम् एतेन युद्धस्य कृते मराठाराज्यकर्तॄणां साहाय्यं याचितम्। एतस्मिन् युद्धे मल्हारराव, खंडेराव स्वयं अहिल्यादेवी च



रणाङ्गणे युद्धार्थं सिद्धासीत्। अस्मिन युद्धे खंडेराव वीरगतिं प्राप्तः। सतीप्रथामनुसृत्य अहिल्यादेवी पत्युरनुगमनं कर्तुं सिद्धा जाता। परं त्वमेव मम पुत्र, मा कुरु साहसमिदमिति श्वशूरस्याक्रोशं श्रुत्वा तस्याः हृदयपरिवर्तनं जातम्। तारुण्ये एव विधवायाः जीवनं प्रारब्धम्। इदानीं जनानुरजनार्थं प्रजा-रक्षणार्थं च तया स्वजीवनं समर्पितम्।

पुत्रवत् प्रजापालनमित्येवासीत्तस्याः जीवनस्य इतिकर्तव्यता। प्रजाधनं प्रजायाः कल्याणार्थमेव व्ययीकर्तव्यमिति विचिन्त्य बहुविधानि समाजकार्याणि कृतानि। दानधर्मेण परोपकारेण च यापितं तया जीवनम्। एका स्त्री कथं कुशलतया राज्यभारं वहति? कथश्च तस्याः राज्यं समृद्धमिति दुष्टजनानां वक्रदृष्टिरासीत्। परमेतादृशानां जनानां कृते सा रणरागिणी खड्गमुधृत्य युद्धं कर्तुं राज्यरक्षणार्थं प्राणार्पणमपि कर्तुं सा सिद्धासीत्। स्त्रीदेहे पुरुषसामर्थ्यं दृष्टं सर्वैः। विधिज्ञया तया कालानुरूपं परिवर्तनं कृतम्। विधवायै दत्तकग्रहणाधिकारः प्रदत्तः। एतत् तस्याः महत्त्वपूर्णं कार्यं समाजं प्रति।

देवालयानां निर्माणं जीर्णोद्धारं, बुभूक्षितानां कृते अन्नसत्रसंचालनम्, धार्मिकविधिनां कृते नद्यां तटबन्धनमेतादृशानि बहुविधानि जनकल्याणकार्याणि तया कृतानि। अतः जनाः सन्तुष्टा आनन्दिताश्चासन्। श्वशुरः पतिः पुत्रः जामाता पुत्री च एतेषां सर्वेषां स्वकुटुम्बियानां मृत्युं दृष्ट्वापि धैर्यधारिणा सा न किञ्चिदपि विचलिता। धैर्येण दुःखसागरं तीर्त्वा तया प्रजापालनं कृतम्।

पुण्यश्लोकबिरुदस्य याथार्थ्यम् सा अन्वहत्। दुःखपूर्णं दीर्घं कालं यापयित्वा ख्रिस्ताब्दस्य १७९५ तमे वर्षे सा दिवंगता। लौकिकार्थेन मृतापि कीर्तिरूपेण चिरंजीवति सा।

***

**कठिनशब्दार्थाः**

१. आनन्दतुन्दिला - हर्षातिरेकेण प्रफुल्लिता।

२. परमल्पकालिकेयमानन्दस्यानुभूतिः-परम् + अल्पकालिका + इयम् + आनन्दस्य + अनुभूतिः

***

# ८. मदायत्तं तु पौरुषम्

**प्रस्तावना**

**भट्टनारायणः (सप्तमशताब्देः उत्तरार्धः- अष्टमशताब्देः पूर्वार्धः)**

प्रायः सर्वेषामेव संस्कृतसाहित्यनिर्मातृणां काल अनिश्चित एव। भट्टनारायणस्य विषयेऽपि तथैव। मम्मट-भोजदेव-धनञ्जय-आनन्दवर्धन-वामनादिभिः उत्तरकालवर्तिभिः। विद्वद्भिः कृतनिर्देशैः तथा अन्तःस्साक्षिभिः इदं निश्चेतुं शक्यते यत् भट्टनारायणः ईसवीयषष्ठशताब्देः उत्तरार्द्धे आसीदिति। वङ्गदेशस्य आदिसूरराज्ञः सभायां सः आसीदिति श्रूयते। 'वेणीसंहारम्' तस्य अद्वितीया नाट्यकृतिः। अस्मिन् नाटके वीररसप्रधानं चरितं वर्णितमस्ति। नाट्यशास्त्रनियमानुगुणं नाटकस्यास्य ग्रथनं चारु कृतं वर्तते। शृङ्गारप्रधाननाटकानि विरचय्य कालिदासादयः प्रसिद्धिमाप्तवन्तः किन्तु वीररसप्रधानं नाटकं लिखित्वा भट्टनारायणेन संस्कृतसाहित्ये स्वीयमुन्नतं स्थानमलङ्कृतम्। अलङ्कारशास्त्रे नाट्यनियमानाम् उदाहरणरूपेण अत्रत्यश्लोकाः बहुधा उदाहीयन्ते। अस्मात् नाटकात् तृतीयाङ्कात् स्वीकृतोऽयं पाठः। अश्वत्थामकर्णयोः विसंवादः अत्र वर्णितः।

---

**अश्वत्थामा**- राजन् कौरवेश्वर, किमद्यापि युक्तायुक्त-विचारणा।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-,
मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाद्य दोःशालिनां,
अपैतु नृपकाननातिगुरुरद्य भारो भुवः॥१॥

**कर्णः**- (विहस्य) वक्तुं सुकरमिदं दुष्करमध्यवसितुम्। बहवः कौरवबलेऽस्य शक्ताः।

**अश्वत्थामा**- अङ्गराज, एवमिदं, दुष्करमध्यवसितुम्। बहवः कौरवबलेऽत्र शक्ताः। किन्तु दुःखोपहतः शोकावेगवशाद् ब्रवीमि न पुनर्वीरजनाधिक्षेपेण।

**कर्णः**- मूढ, दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं नैवंविधाः प्रलापाः।

**अश्वत्थामा**- (सक्रोधम्) अरे, रे, राधागर्भभारभूत, सूतापसद, ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियाम् उपदिशसि न शस्त्रेण।



**कर्णः**- (सक्रोधम्) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध बटो,

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।
दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥२॥

**अश्वत्थामा**- (सक्रोधम्) अरे रे रथकारकुलकलङ्क, अरे रणभीरो, अरे राधागर्भभारभूत, आयुधानभिज्ञ, तातमप्यधिक्षिपसि।

**कर्णः**- एवं भीरुरहम्। पुनविक्रमैकरसं तव पितरमनुस्मृत्य महान्मे संशयो जातः।

**अश्वत्थामा**- (सक्रोधं संकम्पं च) दुरात्मन्, राजवल्लभप्रगल्भ, सूतापसद, असंबद्धप्रलापिन्,

कथमपि न निषिद्धो दुःखिना भीरुणा वा,
द्रुपदतनयपाणिस्तेन पित्रा ममाऽद्य।
तव भुजबलदर्पाध्मायमानस्य वामः,
शिरसि चरण एष न्यस्यते वारयैनम्॥३॥

(इति तथा कर्तुम् उत्तिष्ठति।)

**कृपदुर्योधनौ** - गुरुपुत्र मर्षय। (इति निवारयतः)

(अश्वत्थामा चरणप्रहारं नाटयति)

**कर्णः** - (सक्रोधमुत्थाय खड्गमाकृष्य।) अरे दुरात्मन्, वाचाल, ब्रह्मबन्धो, आत्मश्लाघ,

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम्।
अनेनं लूनं खड्गेन पतितं वेत्स्यसि क्षितौ॥४॥

**अश्वत्थामा**- अरे मूढ, किं नाम जात्या काममवध्योऽहम्?

इयं सा जातिः परित्यक्ता। (इति यज्ञोपवीतं छिनत्ति। पुनश्च सक्रोधम्)
अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम्॥५॥

(उभौ अपि खड्गमाकृष्य अन्योन्यं प्रहर्तुमुद्यतौ। कृपदुर्योधनौ वारयतः)

**दुर्योधनः** - सखे आचार्यपुत्र, शस्त्रग्रहणेनालम्।

**अश्वत्थामा**- मातुल, मातुल, किं निवारयसि? अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव।

**कर्णः** - राजन् न खल्वहं निवारयितव्यः।

अपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना॥ ६॥

**अश्वत्थामा**- राजन्, मुञ्च मुञ्चैनम्। आसादयतु असौ मद्भुजान्तर-निष्पेषसुलभम् असूनाम् अवसादनम्।

(इति प्रहर्तुमिच्छति)

**कर्णः** - (खड्गमुद्यम्य) अरे वाचाट, ब्राह्मणाधम, अयं न भवसि। राजन् मुञ्च मुञ्चता न खल्वहं वारयितव्यः। (हन्तुमिच्छति)

(दुर्योधनकृपौ निवारयतः)

**दुर्योधनः** - कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः?

**कृपः** - वत्स, अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः?

**अश्वत्थामा**- मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम्।

**कृपः** - अकालः खलु स्वबलप्रधानविरोधस्य।

* * *

**कठिनशब्दार्थाः**

| | |
|---|---|
| १. अध्यवसितुम् - कर्मणासाधयितुम्। | २. सूतापसद - पामरसूतः। |
| ३. विकत्थना - आत्मप्रशंसा। | ४. निष्पेषः - संचूर्णनम्। |
| ५. व्यामोहः - विचाराराहित्यम्। | ६. शातयितुम् - शमयितुम्। |

* * *



## ९. हृदयपरिवर्तनम्

**प्रस्तावना**

भारतभूमौ मध्यस्थिते नागपुरनगरे प्राप्तजन्मानः डॉ. श्रीधर-भास्कर वर्णेकर महोदयः 'प्रज्ञाभारती' इत्युपाधिना सुविख्यातः। संस्कृतक्षेत्रे नैकोचितपुरस्कारैः सम्मानिताः श्री. वर्णेकरमहाभागाः 'श्रीशिवराज्योदयम्' महाकाव्यं व्यरचयन्। तदर्थं च १९७४ तमे वर्षे साहित्यअकादमी पुरस्कारेण सुसम्मानितः। अस्य संस्कृतवाङ्मयकोशः, भारतरत्नशतकम्, स्वातन्त्रवीर-शतकञ्चेताः अन्याः रचनाः प्रसिद्धाः सन्ति। कथावल्लरी इत्यस्य लघुकथासङ्ग्रहः। ततः प्रस्तुतोऽयं कथांशः गद्यरूपेण सङ्कलितः। ज्ञानेश्वरी ग्रन्थाभ्यासेन कथं एको नास्तिकः श्रद्धावान् सञ्जातः? इत्येनं विषयं प्रस्तुतकथांशः प्रस्तौति।

---

अस्मिन् संवत्सरे भगवतः ज्ञानेश्वरस्य जन्मसप्तशताब्दी-महोत्सवः सर्वत्र महाराष्ट्रे ग्रामे ग्रामे महोत्साहेन सम्पद्येत इति वृत्तपत्रेषु पठित्वा अस्माभिः कारागृहवासिभिः श्रद्धालुभिः तन्निमित्तं ज्ञानेश्वरीग्रन्थस्य सामूहिकं पारायणं कर्तुं निश्चितम्। पारायणस्य प्रारम्भदिन- निमित्तं कस्यापि नास्तिकशिरोमणेः व्याख्यानं समायोजयितुम् अस्माभिः निश्चितम्। तत्र कारालये अस्मदीये कक्षे आसीत् कश्चन वक्तृत्वकुशलः नास्तिकम्मन्यः स्वनामधन्यः नेता। स मया प्रास्ताविक-व्याख्यानार्थं प्रार्थितः।

तदा स प्राह-जानन्ति एव भवन्तः सर्वेऽपि यद् नाहं ईश्वरे ईश्वरावतारे, महासिद्धे, महायोगिवर्ये, भगवद्भक्ते वा कणशोऽपि विश्वसिमि। यदिदं ज्ञानेश्वर-तुकाराम-रामदास-प्रभृतिभिः साधुजनै प्रभूतं पारमार्थिकं वाङ्मयं विनिर्मितं, तस्य प्रचारः साधुब्रुवैः प्रवचन-कीर्तनकोविदैः अस्मत्सामाजिकेषु चिराय निरन्तरं कृतः। तत्प्रभावादेव अस्मत्समाजे निष्क्रियता, निरुत्साहिता, दिष्टनिष्ठता, दैवायत्तता, इत्यादयो पौरुषघातकाः दुर्गणाः प्रसृप्ताः। अपि च गीता-ज्ञानेश्वरी सदृशानां ग्रन्थानां वैयक्तिकं वा सामूहिकं वा पारायणं निष्फलं बहुलायासं च रटनात्मकं कर्म कालापव्ययकरं च मन्येऽहम्। न कोऽपि बुद्धिनिष्ठः प्रगतिवादी पुरोगामी भवतां ज्ञानेश्वरीपारायणे अनुकूलः भविष्यति, विशेषतश्च मादृशः नास्तिकः अन्धश्रद्धाविरोधकः बुद्धिवादी। अतोऽहं प्रार्थयामि यत् कृपया क्षम्यतां मम निषेधः। अन्यः कोऽपि वक्ता निमन्त्रयतां

पारायणस्य उद्घाटनार्थम्। इत्युक्त्वा सोऽस्मान् साञ्जलिबन्धं बहिर्गमनं समसूचयत्।

''तत् किम् अन्यः कोऽपि नास्तिकवर्यः प्रार्थितः ?''

न हि न हि। तस्य तादृशं दुरभिनिवेशं दृष्ट्वा, तस्यैव नास्तिकशिरोमणेः प्रास्ताविकभाषणेन ज्ञानेश्वरी-पारायणव्रतस्य प्रारम्भोऽस्मामिः हठादेव निश्चितः।

अन्येद्युः प्रातरेव पुनरपि तत्सकाशं गत्वा सा एव प्रार्थना अस्माभिः श्रद्धालुभिः कृता। तदा ''तुष्यतु दुर्जनः'' इति न्यायेन सः अस्मदीयां प्रार्थनाम् अंगीकृत्य आह-

''यद्यपि भवताम् आमन्त्रणं मया स्वीकृतं, तथापि तत्र भाषणावसरे अहं स्वमतम् एव प्रतिपादयिष्यामि। सन्त-साहित्यं सर्वथा तुच्छं, समाजविघातकरं पुरुषार्थप्रतिकूलम् इति स्वमतम् उच्चैर्घोषेण प्रतिपादयिष्यामि।''

''तथाऽस्तु! यद् भवते रोचते तदेव उच्यताम्। अस्माकं श्रद्धा सर्वथा अविचलाऽस्ति भगवतः ज्ञानेश्वरस्य ग्रन्थरत्ने तत्पारायणे च। अतः भवतः प्रास्ताविकभाषणाऽनन्तरं पक्षान्तं यावत् प्रतिदिनं नियतसमये अस्माकं सामूहिकं पारायणं भवेद् एव। श्रवणार्थम् अत्रभवन्तः आगच्छन्तु इति सविनयं प्रार्थयामहे। भवान् यथाभिरुचि करोतु।''

अपरेद्युः प्रभाते ज्ञानेश्वरीपारायण-व्रतनिमित्तं कारालय-प्रांगणस्थस्य महातरोः प्रच्छाये रङ्गावली-निराजन-पुष्पमाला-धूपादिभिः काऽपि पवित्रता समायोज्यत। पारायणकर्तॄणां कृते हंसधवलानि शुचिवस्त्रासनानि समस्थाप्यन्त। सर्वे श्रद्धालवः श्रोतारश्च स्व-स्वासने शुचिस्मितप्रसन्नवदनाः व्यराजन्त।

ततश्च प्रमुखवक्तुः आगमनानन्तरं ''रघुपति राघव राजाराम। पतित-पावन सीताराम॥'' ''निवृत्ति ज्ञानदेव सोपान मुक्ताबाई। एकनाथ नामदेव तुकाराम॥॥ ''श्रीराम जयराम जय जय राम'' इत्यादि भजनपङ्क्तीनाम् उद्गानानन्तरं यथावसरं प्रमुखवक्तृमहाशयस्य नास्तिकतापरं सन्तसाहित्य-निन्दाप्रचुरं ईश्वरास्तित्वखण्डनात्मकं सावेशं व्याख्यानम् अभवत्। तस्य प्रसङ्गानौचित्येन प्रायः सर्वे श्रद्धावन्तः श्रोतारः मनसि किमपि वैरस्यम्



अन्वभवन्। केचन व्याख्यानयोजकं मां सरोषं वीक्षमाणाः अन्योन्यं प्रति माम् उद्दिश्य दोषारोपं कुर्वन्तः मया तिर्यक्कटाक्षपातेन निरीक्षिताः।

ततश्च उपसंहारनिमित्तं स प्रधानवक्ता मया धन्यवादेन यदा समभिनन्दितः तदा बहवः साङ्गुलिनिर्देशं माम् उपहसन्।

तत आरभ्य प्रतिदिनं नियतसमये प्राह्णे पराह्णे च सर्वे श्रद्धावन्तः पारायणं कर्तुं श्रोतुं च तस्यैव महावृक्षस्य प्रच्छायशीतले प्राङ्गणे प्रदीर्घकालं समुपाविशन्। स च नास्तिकशिरोमणिः ततो विदूरे अनास्थया प्रातः सायं चक्रमणं कुर्वाणः अस्मद्दृष्टिपथम् अवतरति स्म।

दिनत्रयानन्तरं। सामूहिकस्वरेण प्रोद्गीतानां ज्ञानेश्वरीपद्यानां गभीरध्वनिना, मन्त्रेण इव बलाद् आकृष्टः असौ पारायणस्थानस्य समीपतः पर्यभ्रमत्। सहसैव सान्द्रगम्भीरेण तेन सामूहिकध्वनिना विवशीभूतः इव असौ मत्समीपे पार्श्वतः समेत्य अवातिष्ठत।

''कृपया पुरःस्थिते आसने उपविश्यताम्'' इतीमां मदीयां प्रार्थनाम् अनिच्छया सम्मान्य स कंचित् कालं कथमपि उपविश्य केनापि निमित्तेन निर्गन्तुम् अनुज्ञां प्रार्थयत। सा च मया मस्तकचालनेन प्रदत्ता।''

अथापरेद्युः ज्ञानेश्वरी-पारायण-प्रारम्भावसरे एव तत्र प्रांगणे आगत्य गम्भीरमुद्रया क्वचिद् आसने सत्रपम् उपविष्टोऽसौ प्रधानवक्ता मया निरीक्षतः। तस्मिन् दिने समग्रं पारायणं स महाशयः सोत्कण्ठम् एकाग्रतया समश्रौषीत्। सा हि तस्य उत्कण्ठा, एकाग्रता, मनाक् तन्मयता च सर्वेषां श्रद्धालूनां कुतूहलविषयः समभूत्।

तस्माद् दिनाद् आरभ्य पारायण-समाप्तिदिवसपर्यन्तं प्रत्यहं नियतसमये समागत्य स महाशयः काव्यामृतमयं ज्ञानेश्वरीग्रन्थं मन्त्रमुग्ध इव श्रुतवान् इति सर्वे भावुकाः श्रद्धावन्तः अतीव प्रसन्ना आसन्।

ग्रन्थपारायणव्रतस्य समाप्तिनिमित्तं तस्यैव उद्घाटकभूतस्य अतिथिविशेषस्य व्याख्यानं भवतु, इति सर्वे व्रतिनः ऐकमत्येन प्रत्यपादयन्। तदामन्त्रणार्थम् अहमेव सर्वैः व्यापारितः। रात्रिभोजनानन्तरम् तत्समीपं गत्वा सर्वेषाम् अपेक्षा मया न्यवेद्यत। तदा प्रीतिस्निग्धेन चक्षुषा सद्भावामृतं मयि निषिञ्चन् इव स प्राह ''अवश्यम् अहं पारायणसमाप्तिनिमित्तं स्वीयं भावञ्जलिं

समर्पयिष्यामि।"

तस्मिन् भाषणावरे पुनरपि अयं श्रीज्ञानेश्वरप्रभृतीनां भगवदवतारवत् सर्वत्र महाराष्ट्रे चिराय प्रपूजितानां साधुवर्याणां, विश्वसाहित्य-ललामभूतानां तदीयग्रन्थानां च निन्दया कर्णकुहरं तुदेत् इति शङ्कमानाः केचन श्रोतारः व्याकुललोचना इव अदृश्यन्त।

परम् अहो आश्चर्यम्! "पुण्डलीक वरदे हरिविठ्ठल! श्रीज्ञानदेव तुकाराम" इति महाराष्ट्रे सर्वत्र सामाजिकेषु सुरूढिं गतां पुण्यघोषणां स्वयम् उच्चैः उद्घोष्य, साश्रुलोचनो भूत्वा, परमभावुक इव साञ्जलिबन्धं स आह-

"हं हो! बान्धवाः कृपया क्षम्यताम् पूर्वं कृतापराधः दुर्जनोऽयम्। अस्य पारायणव्रतस्य प्रारम्भावसरे सर्वेषां भावुकानां मर्मच्छेदकानि यानि सत्पुरुषनिन्दा-प्रचुराणि दुर्वचनानि अज्ञानोपहितधिया मया सावेशम् उक्तानि, तानि स्मृतिपथम् अवतीर्य अद्य ममैव हृन्मर्माणि तुदन्ति। तस्मिन् दिवसे कृतं सर्वं प्रतिपादनं खलु मम अज्ञानविजृम्भितम् आसीत्। यतो हि अतः पूर्वं नास्तिकतायाः दुराभिनिवेशेन न किमपि, ज्ञानेश्वरीसदृशं सकल-साहित्यिकगुणगणरमणीयं परतत्त्वपरं ग्रन्थरत्नं कदापि वाचितम् अलोचितं वा। सन्तसाहित्यं समग्रमेव तुच्छं, अस्मत्समाजपतनस्य निदानम्, इति ममैव खलु अन्धश्रद्धा आसीत्। यथा हि अन्धः स्वयम् अदर्शनेन यत् किमपि कल्पयति, तथैव मया अनवगाह्य, अनवलोक्य वा सत्पुरुषाणां ज्ञान-भक्ति-वैराग्य-सदाचार-प्रतिपादकं वाङ्मयम्, तत् खलु पुराणं कालबाह्यम् अवकरनिकरे निक्षिप्य दग्धव्यम् इति मूढग्रहः हृदि दृढीकृतः आसीत्। अनुभवहीनानां हि मूढग्रहः खलु अन्धश्रद्धा भवति। सा मयि एतावत्कालपर्यन्तं दृढमूलतां गताऽऽसीत्। इदानीं गतसप्ताहे यद् अकल्पितोपनतं सद्ग्रन्थश्रवणं मया भवतां श्रद्धावतां सामूहिकपारायणेन प्राप्तं तेन सर्वथा मम हृदयपरिवर्तनं जातम् अस्ति इति अनुभवामि।

****

**कठिनशब्दार्थाः**

१. कर्णकुहरम् - कर्णरन्ध्रम्।

२. तुदेत् - संत्रासयेत्।



## १०. वेतालकथा

**प्रस्तावना**

वेतालपञ्चविंशतिकायां नृपतिविक्रमसेनं प्रति वेतालेन कथिताः पञ्चविंशतिः कथाः निबद्धाः। क्वचित् ग्रन्थेषु विक्रमसेनस्थाने विक्रमादित्य इति नाम दृश्यते। सम्भाव्यते प्रागयं स्वतन्त्रो ग्रन्थः, सम्प्रति तु बृहत्कथा कथासरित्सागरयोः अङ्गभूतैवेयं प्राप्यते वेतालपञ्चविंशतिका। द्वादशे ततः पश्चात्कालिके वा शतके जातेन केनचित् शिवदासेनेयं लिखितेति प्रवादः। इयमेका गद्यपद्यमयीकथा, अपरा च गद्यमयी इति रूपद्वयमस्या उपलभ्यते। आधुनिकासु सर्वास्वपि भारतीयभाषासु अस्या अनुवादो जात इति लोकप्रियत्वमस्याः साधितं भवति। केनचिद् योगिना उपकृतः कोऽपि नृपः तस्योपकारं चिकीर्षति। योगी नृपं तरुविशेषशाखावलम्बिनं मृतकदेहमानेतुमादिशति। तद्देहाविष्टो वेतालः नृपमाह 'यदि त्वं मूक एव मां नेष्यसि तदाहं त्वया नेतुं शक्यः, अन्यथा नेति'। नृपे तथेत्युक्त्वा तं नयमाने वेतालस्तं पथि जटिलां कथां श्रावयित्वा तदुत्तरं पृच्छति, नृपो यथार्थमुत्तरं वदति, वेतालस्तमेव वृक्षमालम्बते यत्रासौ पूर्वं स्थितः। एवमनुवर्तनेन क्रमेण वेतालः पञ्चविंशतिः कथाः श्रावयति। तासु प्रथमा कथा अत्र प्रदत्ता।

---

अस्ति वाराणसी नाम शङ्करवसतिः पुरी, या कैलासस्य स्थलीव पुण्यजनसेविता, हारयष्टिरिव यस्याः स्वर्गतरङ्गिणी विभाति। तस्यां प्रतापानलनिर्दग्धविपक्षकुलकाननः प्रतापमुकुटो नाम नृपतिः प्रतिवसति स्म। तस्य च वज्रमुकुटो नाम तनयः स्मरस्य जनस्य च रूपशौर्य्ययोर्दर्पदलन आसीत्। तस्य राजपुत्रस्य सखा महामतिः मन्त्रिपुत्रः कश्चिदस्ति। कदाचित् स नृपात्मजः तेन सख्या सह क्रीडन् मृगयाप्रसङ्गेन अतिदूरमध्वानं जगाम। स तत्र सिंहानां मस्तकानां सटाजालानि शौर्य्यश्रीचामराणीव शनैश्छिन्दन् महावनमेकमाससाद। तत्र सरोवरमेकं दृष्ट्वा श्रान्तः स तेन सुहृदा मन्त्रिपुत्रेण तज्जलं पीत्वा प्रक्षालितकरचरणः कस्यापि तीरतरोर्मूले समुपाविशत्।

अत्रान्तरे काऽपि स्नानार्थमागता, दिव्याकृतिः, सुपरिच्छदा, पूरयन्तीव लावण्यनिर्झरेण सरोवरं, दृष्टिपातैः सृजन्तीव तत्रोत्पलवनानि, प्रत्यादिशन्तीव मुखेन जितेन्दुना अम्बुजानि, कन्यका तेन ददृशे। दृष्टैव सा तस्य राजपुत्रस्य मनो जहार तत्क्षणम्। सोऽपि राजसूनुस्तस्या विलोचने अहार्षीत्।

सा तु कन्या तद्दर्शनेन सजातविकारा लज्जया किमपि वक्तुमशक्नुवती हृद्गतमाकूतं सङ्केतेन बोधयन्ती एकमुत्पलं कर्णे गृहीत्वा दन्तरचनां विधाय, पद्म शिरसि कृत्वा हृदये करमदात्। राजपुत्रस्तु तस्यास्तां संज्ञां न विवेद, मन्त्रिपुत्र एव केवलं बुद्धिमान् सर्वं बुबुधे। क्षणेन च सा कन्या अनुगैर्नीयमाना प्रययौ; गत्वा च स्वं गृहं पर्य्यङ्कनिषण्णा तस्थौ। चित्तन्तु तस्यास्तस्मिन् नृपात्मजे एव स्थितम्। सोऽपि राजसुतः कृच्छ्रेण स्वनगरीं गत्वा तया विना नितरां व्यथितो दिने दिने कृशतामवाप।

दृष्ट्वा च तत् मन्त्रिपुत्रेण तेन रहसि तामदुष्प्रापां शंसता समाश्वासितस्त्यक्तधैर्य्यः प्रोवाच, - "सखे ! यस्या नाम न, ग्रामो न, अन्वयश्च नावबुध्यते, सा कथं प्राप्यते ? तन्मृषा मां किमाश्वासयसि ?" इति राजपुत्रेण उक्तो मन्त्रिपुत्रस्तमभ्यधात्, - "देव ! किं न दृष्टं त्वया यत् यत् तया संज्ञया सूचितम् ? यत्तया कर्णे उत्पलं न्यस्तं, तेन एतत् सूचितं, - कर्णोत्पलस्य राज्ञः राष्ट्रे अहं निवसामीति। कृता च या दन्तरचना, तया एतत् सूचितं, - यथाऽहं तत्र दन्तघाटकस्य कन्येति। शिरसि पद्म धृत्वा एतत् सङ्केतितं, यथाऽहं नाम्ना पद्मावतीति। हृदयार्पितहस्तया च तया, - त्वयि मे प्राणाः स्थिता इति सङ्केतितम्। अस्ति च कलिङ्गदेशे कर्णोत्पलो नाम नृपः। तस्य चित्तप्रसादकः महासमृद्धिमान् दन्तघाटकः सङ्ग्रामवर्द्धनो नाम प्रतिवसति, तस्य कन्यारत्नमियं पद्मावती नाम प्राणाधिकप्रियम्। एतत् लोकमुखात् मया विदितम्। तस्मात् मया तस्याः देशादिसङ्गिनी संज्ञा ज्ञाता।" इति तेन मन्त्रिपुत्रेणोक्तो राजपुत्रः तस्मै सुधिये तुतोष, जहर्ष च लब्धोपायः।

अथ स तेन मन्त्रिपुत्रेण सम्मन्त्र्य प्रियाऽर्थी पुनर्मृगयाव्याजेन तत् सरोऽगमत्। अर्द्धमार्गे च वाताश्ववेगात् सैनिकान् पार्श्वचरानतीत्य तेनैव मन्त्रिपुत्रेण युतः कलिङ्गाभिमुखं ययौ। प्राप्य तन्नगरं कर्णोत्पलनृपतेः अन्विष्य च दन्तघाटकस्य भवनं, दृष्ट्वा च तददूरे, वासार्थं कस्याश्चित् वृद्धाया योषितो गृहं तौ राजपुत्रमन्त्रिपुत्रौ प्राविशताम्। तत्र च वाहौ यवससलिलैः पूरयित्वा गुप्तमवस्थाप्य मन्त्रिपुत्रः तां वृद्धामपृच्छत्, - "वृद्धे ! कच्चित् अस्मिन् नगरे कमपि दन्तघाटकनामानं वेत्सि?" तदाकर्ण्य सा जरती सादरं तमभाषत, - "वत्स ! सुष्ठु वेद्मि, तस्याहं धात्री अस्मि, तेनैवाहं पद्मावत्याः स्वदुहितुः पार्श्वे स्थापिता; किन्तु अहं तत्राधुना अपहृताम्बरा न गच्छामि, जातु कुपुत्रः



कितवो मे वस्त्रं दृष्ट्वैव सद्यः हरेत्" इति। एवमुक्तवतीं तां हृष्टः मन्त्रिपुत्रः स्वोत्तरीयादिदानेन सन्तोष्य पुनरब्रवीत्- "मातः! त्वम् आवाभ्यां यद् यत् कथ्यते, तत्तत् सुगुप्तं कुरूष्वः तां दन्तघाटसुतां पद्मावतीं गत्वा वद- यस्त्वया सरसीतटे राजपुत्रो दृष्टः, सोऽत्र आगतः, तेनार्थिताऽहं त्वदन्तिकं प्रणयादायाता" इति।

तदाकर्ण्य सा वृद्धा दानवशीकृता तदैव पद्मावतीपार्श्वं गत्वा अवसरं प्राप्य तां जगाद, - "वत्से ! तौ राजसुतमन्त्रिसुतौ त्वत्प्राप्तये अत्र समागतौ, साम्प्रतं करणीयमादिश" इत्यभिहिता सा तां निर्भर्त्स्य पाणिभ्यां द्वाभ्यां कर्पूरलिप्ताभ्यां द्वयोः कपोलयोराहन्। ततः सा परिभववार्त्ता रुदती गृहमागम्य तावभाषत- पुत्रौ ! पश्यत मुखे मे तया एता अङ्गुलिमुद्रा दत्ताः । एवं तयोक्ते नैराश्यविषण्णं तं राजसुतं स महाबुद्धिर्मन्त्रिसुतः जनान्तिकमवादीत्- "सखे ! मा विषादं गमः मन्त्रं रक्षन्त्या तया निर्भर्त्स्य यत् कर्पूरशुभ्रा अस्या मुखे दश स्वाङ्गुलयो निहिताः एतैरेतत् सूचितं, यथा अस्मिन् शुक्ले पक्षे चन्द्रवतीरिमा दश रात्रीः सङ्गमानर्हाः प्रतीक्षस्व" इति।

इत्येवं राजपुत्रं समाश्वास्य स मन्त्रिसुतः गुप्तं हस्तस्थं काञ्चन किञ्चिद् आपणे विक्रीय तया वृद्धया महाऽर्हं भोजनं साधयामास। ततस्तौ द्वौ सह तया वृद्धया बुभुजाते।

मन्त्रिसुतः पुनरपि तां वृद्धां पद्मावतीसकाशं प्राहिणोत्। सा तस्मिन् दिने गता तया समादृत्य भोजिता, पानादिभिश्च दिनं सर्वं विनोदिता। यावत् सा सायं गृहमागन्तुमिच्छति, तावत् तत्र बहिः भयङ्करः कोलाहलः समुदभूत् -हा! हा! अयं मत्तहस्ती स्वावासात् भ्रष्टः जनान् मथ्नन् प्रधावति इति जना आक्रन्दन्तः पलायमानाः शुश्रुविरे। ततः सा पद्मावती तां वृद्धामभाषत - "अम्ब ! साम्प्रतं हस्तिरुद्धे पथि त्वया न गन्तव्यं, तत् त्वां पीठिकां समारोप्य आलम्बनरज्जुभिर्बद्ध्वा अनेन बृहता गवाक्षेण अत्र गृहोद्याने प्रक्षिपामि, ततो वृक्षमारुह्य विलङ्घ्य च प्राकारम् अन्येन वृक्षेण स्वगृहं व्रज इति। एवमुक्त्वा सा चेटीभिस्तां वृद्धां रज्जुपीठिकया गवाक्षात् उद्याने प्रक्षेपयामास। सा च गृहं गत्वा तत् सर्वं ताभ्यां राजपुत्रमन्त्रिपुत्राभ्यां शशंस।

तदा स मन्त्रिपुत्रस्तं राजपुत्रमभाषत- "सखे ! सिद्धं ते अभिलषितं, युक्त्या तया मार्गो दर्शितः, तदद्यैव प्रदोषे त्वम् एतेनैव पथा तत् प्रियामन्दिरं

गच्छ।'' इत्युक्तस्तेनैव मन्त्रिपुत्रेण युतः स राजपुत्रः तेनैव पथा वृद्धया दर्शितेन तदुद्यानं ययौ, ददर्श च तत्र तां लम्बमानां सपीठिकां मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठितां रज्जुम्। स च तां दृष्ट्वैव यावत् आरोहति स्म, तावत् ताभिः सखीभिः तया रज्ज्वा गवाक्षेणाकृष्टः प्रियान्तिकं प्राविशत्। तस्मिंश्च प्रविष्टे स मन्त्रिपुत्रस्तमेव वृद्धाऽऽवासं प्रायात्।

राजपुत्रस्तु तां पद्मावती पूर्णेन्दुवदनां प्रसरत्कान्तिचन्द्रिकां कृष्णपक्षात् गुप्तं स्थितां राकाविभावरीमिव अद्राक्षीत्। साऽपि तं दृष्ट्वा तत्कालोचितैः कण्ठग्रहादिभिस्तैस्तैः प्रौढाचारै रमयामास। ततस्तत्र गान्धर्वविधिना समूढया तया सह कान्तया गुप्तं विहरन् कतिचित् दिनानि स्थित्वा कदाचित् तां प्रियामवदत्- ''प्रिये! मम सखा मन्त्रिपुत्रः मयैव सहायातः अत्र वृद्धागृहे एकाकी तिष्ठति तद् गत्वा तं सम्भाव्य पुनरेष्यामि'' इति। तदाकर्ण्य सा धूर्ता पद्मावती तं प्रियमाह स्म- ''नाथ! त्वामहं पृच्छामि, मत्कृस्तास्ताः संज्ञास्त्वया ज्ञाताः? उत ते तेन मन्त्रिपुत्रेण? तथा अभिदधतीं तां राजपुत्रोऽब्रवीत्- ''प्रिये! न ज्ञातं मया तत् सर्वं, तेनैव मे मित्रेण दिव्यज्ञानवता सर्वं विदित्वा मे समाख्यातम्।'' एतदाकर्ण्य सा भामिनी विचिन्त्य तं प्रत्यभाषत- ''नाथ ! तर्हि अयुक्तं कृतं त्वया चिरात् तद्वार्त्तां कथयता, यस्ते सखा, स मे भ्राता, तस्य प्रथममेव मया ताम्बूलादिसमाचारेण सम्मानना कर्त्तव्याऽऽसीत्।'' इति उक्तवत्या तयाऽनुमतः राजपुत्रस्तेनैव पथा तस्यां निशि सख्युरन्तिकमागात्, अकथयच्च तत् सर्व प्रियया कथितम्। मन्त्रिपुत्रस्तु तदयुक्तमिति न तत् सादरमभ्यमन्यता इत्थं परस्परमालपतोस्तयोः सा विभावरी पर्य्यगात्।

अथ तयोः सान्ध्ये विधौर्निवृत्ते पक्वान्नताम्बूलहस्ता पद्मावती सखी तत्राऽऽगात्। सा समागत्य तं मन्त्रिपुत्रं कुशलं पृष्ट्वा दत्तोपचारा, युक्तितः राजपुत्रस्य भोजनं निषेद्धुं ''सा तव प्रिया भोजनादौ त्वदागमं प्रतीक्षमाणा आस्ते'' इति आवेद्य क्षणात् ततः प्रायात्।

ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत- ''देव! कौतुकमेकं पश्य, त्वां दर्शयामि'' इत्युक्त्वा स तस्मादेकं पक्वान्नमादाय सारमेयाय तत्र स्थिताय प्रादात्। स भुक्त्वैव तत्क्षणात् व्यापद्यत। तदवलोक्य किमिदं चित्रम्!! इति तं मन्त्रिपुत्रं राजपुत्रः पर्य्यपृच्छत्। स चैनं प्रत्यभाषत - देव ! संज्ञाप्रकटनेन मां धूर्तं विदित्वा हन्तुकामया त्वदनुरक्तया तया, -अस्मिन् सति राजपुत्रो



मदेकायत्तचित्तो न भवेत्, एतद्वशश्च मां विहाय स्वां नगरीं व्रजेत् इति विचारयन्त्या मम भक्षणार्थं विषान्नं प्रहितम् ; तस्मात् त्वमेतस्यां मन्युं मुञ्च अहं कामप्यत्र युक्तिं पर्य्यालोचयामि।'' इत्युक्तवन्तं मन्त्रिसुतं स राजपुत्रः सत्यं त्वं बुद्धिशरीरः इति यावत् स्तौति, तावत् सहसा दुःखाकुलजनैरुदीरितः- ''हा धिक्! राज्ञो बालः सुतो विपन्नः'' इति रवः श्रूयते स्म। तत् आकर्णनेन हृष्टः स मन्त्रिपुत्रस्तं नृपात्मजं जगाद- ''देव ! अद्य पद्मावतीगेहं निशि व्रज गत्वा तां तथा मद्यं पाययेः, यावत् पानमदेन सा निःसंज्ञा नष्टचेष्टा गतजीवितेव स्यात्। ततस्तस्याः सनिद्रायाः कटितटे शूलेन अग्नितप्तेन अङ्कंदत्त्वा आभरणानि च गृहीत्वा गवाक्षेन तेनैव प्रकारेण आगच्छेः, ततः परं यथा भद्रं भवेत् तथा करिष्यामि'' इत्युक्त्वा कारयित्वा च त्रिशूलं तस्मै राजसूनवे प्रादात्। सोऽपि राजपुत्रस्तत् कुटिलकर्कशं कालायसदृढं कान्तावयस्ययोश्चित्तमिव हस्ते गृहीत्वा पूर्ववत् रात्रौ पद्मावतीगृहमेत्य शुचेः स्वमन्त्रिणो वाक्यं प्रभूणामविचार्य्यमितिमत्वा तत्र मद्यपानःनिश्चेष्टां तां जघने शूलेनाङ्कितां हतालङ्करणाश्च कृत्वा सख्युरन्तिकमागात्, अशंसच्च आभरणानि दर्शयित्वा तत् सर्वम्।

ततः मन्त्रिपुत्रः स्वं समीहितं सिद्धं मत्वा, प्रातः श्मशानं गत्वा, स्वयं तापसरूपभृदभवत्, अकरोच्च राजपुत्रं शिष्यरूपिणम्, अब्रवीच्च- ''त्वमेभ्याऽलङ्कारेभ्यः इमां मुक्तावलीं नीत्वा विक्रेतुम् आपणं व्रज, यदि त्वां पुररक्षिणो गृह्णीयुः, तदा इत्थं ब्रूयाः यत्,- इयं मे गुरुणा विक्रयार्थं दत्ता'' इति। सन्दिष्टः स राजसुतः आपणं गत्वा तथैव मुक्तावलीं विक्रेतुमतिष्ठत्, अगृह्यत च तथाभूतः पुररक्षिभिः। ते च दन्तघाटसुतायाः अलङ्करणमोषान्वेषणार्थिनः तं राजसुतं तत्क्षणं नगराध्यक्षान्तिकं निन्युः। स च नगराध्यक्षस्तं तापसाकारं दृष्ट्वा सान्त्वेन पप्रच्छ,- भगवन्! कुत इयं मुक्तावली आसादिता ? दन्तघाटकन्याया इदमाभरणं हृतम्।'' तदाकर्ण्य राजपुत्रस्तानवादीत्- भद्रा ! गुरुणा ममैषा विक्रेतुं दत्ता, तद्युष्माभिरेत्य स पृच्छ्यताम् इति।

ततस्तं समुपेत्य नगराधिपः पप्रच्छ- ''भगवन् ! इयं मुक्तावली कुतस्तव शिष्यगता?'' एतदाकर्ण्य स धूर्तो मन्त्रिसुतः तं रहसि अवादीत्, - भद्र ! अहं तपस्वी सदा अस्मिन् इतस्ततो भ्राम्यामि; सोऽहं दैवात् अत्र श्मशाने स्थितो निशि समस्तं योगिनीचक्रं समागतमपश्यम्। तासु चैकया योगिन्या राजपुत्र एकः

उद्घाटितहृदयाम्भोजो भैरवाय निवेदितः। पानमत्ता च सा जपतो मे मोक्षमालिकां हर्तुं महामाया विविधविकारपूर्णमुखी यावत् प्रावर्त्तत, तावत् अतिदर्पिता सा क्रुद्धेन मया जघनस्थले त्रिशूलेन मन्त्रप्रज्वलिताग्निणा अङ्किता, हृता च तस्या इयं मुक्तावली कण्ठात्। तदेषा तापसानर्हा विक्रयार्थं प्रेषिता।

तदाकर्ण्य स नगराध्यक्षो गत्वा राजानं तत् सर्वं व्यजिज्ञपत्। भूपोऽपि आकर्ण्य तत्, दृष्ट्वा च तां मुक्तावलीं प्रेक्षणाप्रहिताया वृद्धाया आप्तवनिताया मुखात् दृश्यशूलाङ्कां जघने तां पद्मावतीं श्रुत्वा, सत्यमेव त्रस्तः सुतो मेऽनया डाकिन्या इति समुत्पन्ननिश्चयः, स्वयं तस्य मन्त्रिपुत्रस्य तापसवेशिनोऽन्तिकं गत्वा, तस्याः पद्मावत्या निग्रहं पृष्ट्वा च, तस्य वचसा पितृभ्यां शोच्यमानायाः तस्याः पुरान्निर्वासनं दण्डं व्यधात्। साऽपि निर्वासिता अटवीस्था तत् सर्वं मन्त्रिपुत्रकृतं सम्भाव्य तनुं न जहौ। दिनान्ते तौ राजपुत्रमन्त्रिपुत्रौ तापसवेशं त्यक्त्वा अश्वाऽऽरूढौ शोचन्तीं तां प्रापतुः निन्यतुश्च अश्वमारोप्य स्वराष्ट्रम्। तत्र चागत्य स राजपुत्रः तया साकं सुनिर्वृतस्तस्थौ। दन्तघाटस्तु अरण्ये क्रव्यादृभिर्भक्षितां सुतां मत्वा शोकेन पञ्चत्वमगात्, भार्या च तस्य तमनुजगाम।

इति कथाम् आख्याय वेतालस्तं नृपमपृच्छत्- ''राजन्! एतयोर्दम्पत्योर्वधात् राजपुत्रस्य मन्त्रिपुत्रस्य वा पद्मावत्याः पातकं भवेत्? त्वं हि बुद्धिमतां वरो दृश्यसे, तदत्र मे संशयं छिन्धि। यदि जानन्नपि मे तत्त्वं न वदिष्यसि, तदा ते मूर्द्धा निश्चितं शतधा स्फुटिष्यति, यदि च सदुत्तरं दास्यसि, तदाऽहं पुनस्तव स्कन्धात् तमेव शिंशपातरुमाश्रयिष्ये इति।''

इत्युक्तवन्तं वेतालं राजा त्रिविक्रमसेनस्तं प्रत्यवादीत्- ''योगेश्वर ! किन्ते अज्ञातम्? तथाऽपि वच्मि- एतेषां त्वयोक्तानां त्रयाणामपि नैव पातकं, केवलं कर्णोत्पलस्य राज्ञ एव तत् पातकं भवति। वेतालः प्राह स्म- 'राज्ञः को दोषः?' ते त्रयः तत्कारकाः; हंसैः शालिषु जग्धेषु काकाः किमपराध्यन्ति ? ततो राजाऽब्रवीत्- ''ते त्रयोऽपि न दुष्यन्ति, मन्त्रिपुत्रस्य प्रभुकार्यमेव हितं, तदत्र सोऽपातकी, पद्मावतीराजपुत्रौ हि कामशराग्निना निर्दग्धौ अविचारज्ञौ, तस्मात् स्वार्थसम्पादनाददोषौ। राजा तु नीतिशास्त्रेषु सुशिक्षितोऽपि चारैः प्रजासु तत्त्वमनन्विष्यन् धूर्त्तचरितानि च जानन् अविचारं कृतवानिति स एवात्र



पातकी।'' इति निशम्य स वेतालः तस्य राज्ञः दार्ढ्यं परीक्षितुं मायाबलात् तत्क्षणं तमेव शिंशपातरुमशिश्रियत्। राजाऽपि निःशङ्कः पुनरमुम् आनेतुं तत्रागात्।

***

**कठिनशब्दार्थाः**

| | | | |
|---|---|---|---|
| १. | इन्दुः - चन्द्रः। | २. | अम्बुजं - कमलम्। |
| ३. | जहार - त्यक्तवान्। | ४. | पर्यङ्कः - तल्पः। |
| ५. | मृषा - असत्यम्। | ६. | महार्घं - बहुमूल्यं। |
| ७. | अहनि - दिवसे। | ८. | गवाक्षः - वातायनम्। |
| ९. | राकाविभावरी - पूर्णचन्द्रनिशा। | १०. | उढा - विवाहिता। |
| ११. | कौतुकं - कुतूहलम्। | १२. | सारमेयः - शुनकः। |
| १३. | चित्रम् - आश्चर्यम्। | १४. | विपन्नः - मारितः। |
| १५. | सुनूः - पुत्रः। | १६. | रहसि - एकान्ते। |
| १७. | दर्पः - अहङ्कारः। | १८. | मूर्द्धा - शिरः। |
| १९. | तरु - वृक्षः। | २०. | चारः - गुप्तचरः। |

***

# पद्यविभागः

## १. सीतायाः अभिज्ञानम्

**प्रस्तावना-**

रामायणमिति महर्षिवाल्मीकिना रामचन्द्रचरितमाधारीकृत्य रचितं महाकाव्यम्। ऋषिणा रचितं काव्यमिदमत एव आर्षमहाकाव्यमित्युच्यते। रामायणमिति लौकिकसाहित्यस्य प्रथमाविष्कारः। अत वाल्मीकिऋषिः आदिकविः रामायणञ्च आदिकाव्यमित्यप्युच्यते। भारतीयसंस्कृतौ रामायणस्य महत्त्वमनन्यसाधारणम्। रामायणसदृशकीर्तिर्नान्येन काव्यग्रन्थेन अधिगता स्यात्। अत एवोक्तम् -

**यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद्रामायणकथा लोकेषु प्रचरिष्यति।।**

चतुर्विंशतिसहस्रश्लोकयुतोऽयं ग्रन्थः चतुर्विंशतिसाहस्रीसंहितेति नाम्नापि प्रसिद्धः। महाकाव्यमिदं सप्तकाण्डेषु विभक्तम् बालकाण्डम्, अयोध्याकाण्डम्, अरण्यकाण्डं, किष्किंधाकाण्ड, सुन्दरकाण्डं, युद्धकाण्डम्, उत्तरकाण्डञ्च।

प्रस्तुतपद्यांशः सुन्दरकाण्डस्य पञ्चदशसर्गतः स्वीकृतः। सीताया अन्वेषणार्थं गतेन हनुमता अशोकवाटिकायां सीता दृष्टा। तां दीनदीनां सीतां दृष्ट्वा हनुमता मनोगतविचारा अत्र प्रकटीकृताः। रामचन्द्रेण वर्णिता सेयं सीतेति निश्चित्य सः प्रसन्नः जातः। महर्षि-वाल्मीकेः कल्पनारम्यत्वं भाषासौष्ठवञ्चात्र दृश्यते।

---

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥१॥

सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः।
नानानिनादैरुद्यानं रम्यं मृगगणाद्विजैः॥२॥

अनेकगन्धप्रवहं पुण्यगन्धं मनोहरम् ।
शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ॥३॥

अशोकवनिकायां तु तस्यां वानरपुङ्गवः
स ददर्शाविदूरस्थं चैत्यप्रासादमूर्जितम् ॥४॥

मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ।
प्रवालकृतसोपानं तप्तकाचनवेदिकम् ॥५॥

मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ।
निर्मलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ॥६॥
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः॥७॥
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥८॥
पीडितां दुःखसंतप्तां परिक्षीणां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥९॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ॥१०॥
सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ॥११॥
तर्कयामास सीतेति कारणैरूपपादिभिः।
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥१२॥
यथारूपा हि दृष्टा सा तथारूपेयमङ्गना ।
पूर्णचन्द्राननां सुभ्रू चारुवृत्तपयोधराम् ॥१३॥
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः।
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ॥१४॥
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ।
शोकजालेन महता विततेन न राजतीम् ॥१५॥
संसक्तो धूमजालेन शिखामिव विभावसोः।
तां स्मृतीमिव संदिग्धामृद्धिं निपतितामिव ॥१६॥
विहतामिव च श्रद्धामाशां प्रतिहतामिव ।
सोपसर्गा यथा सिद्धिं बुद्धिं सकलुषामिव ॥१७॥



अभूतेनापवादेन कीर्तिं निपतितामिव ।
रामोपरोधव्यथितां रक्षोगणनिपीडिताम् ॥१८॥
अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः।
बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा ॥१९॥
वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥२०॥
तस्य संदिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥२१॥
दुःखेन बुबुधे सीतां हनुमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥२२॥
तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादयन् ॥२३॥
पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् ।
उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥२४॥
भूषणानि च मुख्यानि दृष्टानि धरणीतले ।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥२५॥
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रणष्टापि सती यस्य मनसो न प्रणश्यति ॥२६॥
इयं सा यत्कृते रामश्चतुर्भिरिह तप्यते ।
कारुण्येनानृशंस्येन शोकेन मदनेन च ॥२७॥
स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥२८॥
एवं सीतां तथा दृष्ट्वा हृष्टः पवनसम्भवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥२९॥

***

**कठिनशब्दार्थाः**

१. अवेक्षमाणः - अव ईक्ष् शानच् प्रत्ययः पु.प्र.ए.व.

२. गन्धाढ्यम् - गन्धेन आढ्यः। तम्। तृ.तत्पु. गन्धेन परिपूर्णः।

३. मुष्णन्तम् - मुष् शतृप्रत्ययः। मुष्णन्तमिव चक्षुंषि। नेत्राकर्षकम् प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् - उतुंङ्गत्वात् आकाशे उल्लिखितां रेखमिवदृष्टं तदाल्यम्

४. वितिमिरा - विगतः तिमिरः यासु ताः (प्रादि बहु.) दिशः, प्रकाशमयाः दिशः इत्यर्थः।

५. तर्कयामास - तर्क् आमन्तपरोक्षभूतकालः। तर्कः कृतः।

६. चतुर्भिर्तप्यते - करुणा, दया, शोकः तथा प्रेम एतैर्चतुर्भिर्तप्यते।

७. प्रणष्टा - प्र + नश् अदृश्या जातेत्यर्थः।

* * *



## २. ब्रह्मचारिधर्मः

**प्रस्तावना**

मनुस्मृतिः हिन्दुधर्मीयाणां प्राचीनो महत्त्वपूर्णश्च स्मृतिग्रन्थः। मनुस्मृतेः परिचयः मानव-धर्मशास्त्ररूपेण मनुसंहिता इत्यादिरूपेण अस्मासु वर्तते। धर्मशास्त्रभूतत्त्वात् अयं मनुस्मृतिग्रन्थः विश्वस्य अमूल्यो निधिः।

प्रस्तुतः पद्यांशः मनुस्मृतेः द्वितीयाध्यायात् उद्धृतः यत्र ब्रह्मचारिधर्मस्य वर्णसंस्काराणां च वर्णनं कृतम्। ब्रह्मचारिणा कथं वर्तितव्यमिति अत्र सुस्पष्टं निरूपितम्।

---

कृतोपनयनस्याऽस्य व्रताऽऽदेशनमिष्यते।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥१॥

यद् यस्य विहितं चर्म यत् सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥२॥

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥३॥

नित्यं स्नात्वा शुचिः कुर्याद् देवर्षिपितृतर्पणम्।
देवताऽभ्यर्चनं चैव समिदाधानमेव च ॥४॥

वर्जयेन् मधु मासं च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥५॥

अभ्यङ्गमञ्जनं चाऽक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम्॥६॥

द्यूतं च जनवादं च परिवादं तथाऽनृतम्।
स्त्रीणां च प्रेक्षणाऽऽलम्भमुपघातं परस्य च ॥७॥

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्।
आहरेद् यावदर्थानि भैक्षं चाऽहरहश्चरेत्॥८॥

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु।
ब्रह्मचार्याहरेद् भैक्षं गृहेभ्यः प्रयतोऽन्वहम्॥९॥

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभे त्वन्यगेहानां पूर्वंपूर्वं विवर्जयेत्॥१०॥
सर्वं वाऽपि चरेद् ग्रामं पूर्वोक्तानामसम्भवे।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्॥११॥
दूरादाहृत्य समिधः सन्निदध्याद् विहायसि।
सायम्प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः॥१२॥
चोदितो गुरुणा नित्यमप्रचोदित एव वा।
कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च॥१३॥
शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद् वीक्षमाणो गुरोर्मुखम्॥१४॥
हीनाऽन्नवस्त्रवेषः स्यात् सर्वदा गुरुसन्निधौ।
उत्तिष्ठेत् प्रथमं चाऽस्य चरमं चैव संविशेत्॥१५॥
पराङ्मुखस्याऽभिमुखो दूरस्थस्यैत्य चाऽन्तिकम्।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः॥१६॥
नोदाहरेदस्य नाम परोक्षमपि केवलम्।
न चैवाऽस्याऽनुकुर्वीत गतिभाषितचेष्टितम्॥१७॥
दूरस्थो नाऽर्चयेदेनं न क्रुद्धो नाऽन्तिके स्त्रियाः।
यानाऽऽसनस्थश्चैवैनमवरुह्याऽभिवादयेत्॥१८॥
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः।
नैनं ग्रामेऽभिनिम्लोचेत् सूर्यो नाऽभ्युदियात् क्वचित्॥१९॥
आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।
शुचौ देशे जपञ्जप्यमुपाऽऽसीत यथाविधि॥२०॥
धर्माऽर्थावुच्यते श्रेयः कामाऽर्थौ धर्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥२१॥
आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।
माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः॥२२॥
यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्।



न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि॥२३॥
त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास् त्रयोऽग्नयः॥२४॥
पिता वै गार्हपत्योऽग्निर्माताऽग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साऽग्नित्रेता गरीयसी॥२५॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते॥२६॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्॥२७॥
आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥२८॥
न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥२९॥
आचार्ये तु खलु प्रेते गुरुपुत्रे गुणाऽन्विते।
गुरुदारे सपिण्डे वा गुरुवद् वृत्तिमाचरेत्॥३०॥
एतेष्वविद्यमानेषु स्नानाऽऽसनविहारवान्।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद् देहमात्मनः॥३१॥
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः।
स गच्छत्युत्तमस्थानं न चेहाऽऽजायते पुनः॥३२॥

***

**कठिनशब्दार्थाः**

१. भैक्षम् - भिक्षायाः प्राप्तं पिष्टकादिकम्।
२. आहृत्य - आनीय।
३. जुहुयात् - यज्ञं कुर्यात्।
४. निष्कृतिः - पापस्य परिमार्जनम्।

## ३. श्रीकृष्ण-नारदसंवादः

**प्रस्तावना**

संस्कृतसाहित्ये पञ्चमहाकाव्येषु महाकविमाघस्य शिशुपालवध-महाकाव्यस्य अनन्यं स्थानं वर्तते। काव्यमिदं विंशतिसर्गात्मकम्। प्रस्तुतपद्यांशः शिशुपालवधस्य श्रीकृष्ण-नारदसंवादाख्यात् प्रथमसर्गात् सङ्ग्रहीतः। गगनमार्गेण समागतस्य नारदस्य श्रीकृष्णकृतं वर्णनमिदम्।

---

निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी।
विलोचने बिभ्रदधिश्रितक्षिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत्॥०१॥

सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः॥०२॥

हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥०३॥

जगत्यपर्याप्तसहस्रभानुना, न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वयानुन्नमनुत्तमं तमः॥०४॥

कृतः प्रजाक्षेमकृता प्रजासृजा सुपात्रनिक्षेपनिराकुलात्मना।
सदोपयोगेऽपि गुरुस्त्वमक्षयो निधिः श्रुतीनां धनसम्पदामिव॥०५॥

विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसी गिरोऽथवा श्रेयसि केन तृप्यते॥०६॥

गतस्पृहोऽप्यागमनप्रयोजनं वदेति वक्तुं व्यवसीयते यया।
तनोति नस्तामुदितात्मगौरवो गुरुस्तवैवागम एष धृष्टताम्॥०७॥

अति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम त्वया।
त्वमेव साक्षाकरणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि॥०८॥

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया॥०९॥



उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः॥१०॥

निवेशयामासिथ हेलयोद्धृतं फणाभृतां छादनमेकमोकसः।
जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरस्सु भूतलम्॥११॥

अनन्यगुर्व्यास्तव केन केवलः पुराणमूर्तेर्महिमाऽवगम्यते।
मनुष्यजन्माऽपि सुरासुरान् गुणैर्भवान् भवच्छेदकरैः करोत्यधः॥१२॥

लघूकरिष्यन्नतिभारभङ्गुरामम् किल त्वं त्रिदिवादवातरः।
उदूढलोकत्रितयेन साम्प्रतं गुरुर्धरित्री क्रियतेतरां त्वया॥१३॥

निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि।
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश मादृशाम्॥१४॥

उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर! विश्वमीशिषे।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीसमं नभः॥१५॥

करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत् तव स्तवम्।
हरे! हिरण्याक्षपुरस्सरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया॥१६॥

प्रवृत्त एव स्वयमुज्झितश्रमः क्रमेण पेष्टुं भुवनद्विषामसि।
तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः॥१७॥

***

**कठिनशब्दार्थाः**

१. निदाघः - ग्रीष्मकालः।
२. निबर्हितांहसा - अपहृतपाप्मना।
३. पुराविदः - तत्त्ववेत्ता।
४. पेष्टुम् - पिष् पेषणे धातोः तुमन्तं रूपम्।
५. ओकसः - गृहस्य।
६. क्षपा - रात्रिः।

***

## ४. गङ्गास्तवनम्

**प्रस्तावना-**

प्रस्तुतपद्यानि संस्कृतकवेः पण्डितराज-जगन्नाथस्य गङ्गालहरी (पीयूषलहरी) काव्यात् सङ्ग्रहीतानि सन्ति। काव्येऽस्मिन् कविः शिखरिणीच्छन्दसि द्विपञ्चाशत्सु पद्येषु जगन्मातरं गङ्गां स्तौति। एतत्काव्यमधिकृत्य महाराष्ट्रकविवर्यस्य वामनपण्डितस्य समश्लोकी काव्यं मराठीभाषायां सर्वविदितं राजते।

---

कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरान् दूरीकर्तुं त्वमिव जननि त्वं विजयसे।।०१।।

निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः।।०२।।

पुरो धावंधावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरुणतरखेदस्य नियतम्।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातर्यदिह करुणातः क्षणमपि।।०३।।

मरुल्लीलालोलल्लहरिलुलिताम्भोजपटली-
स्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कुमरुचि।
सुरस्त्रीवक्षोजक्षरदगरुजंबालजटिलं
जलं ते जंबालं मम जननजालं जरयतु ।।०४।।



समुत्पत्तिः पद्मारमणपदपद्मामलनखात्
निवासः कंदर्पप्रतिभटजटाजूटभवने।
अथाऽयं व्यासंगो हतपतितनिस्तारणविधौ
न कस्मादुत्कर्षस्तव जननि जागर्तु जगतः ।।०५।।

नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणानां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः।।०६।।

विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्षि जननि।।०७।।

***

**कठिनशब्दार्थाः**

१. तीर्थनिवहा - तीर्थसमूहाः।
२. यान्ती - तटिनी (नदी)।
३. सवित्री - सूते प्रसवते इति सवित्री (प्रदात्री)।

***

# ५. सौन्दर्यलहरी

**प्रस्तावना**

'सौन्दर्यलहरी'ति स्तोत्रं श्रीमता जगद्गुरुणा श्रीशङ्कराचार्येण प्रणीतम्। श्रीशङ्कराचार्यः आद्यः अद्वैतवेदान्तमतप्रवर्तकरूपेण विख्यातः। शतमितश्लोकेषु शिखरिणीवृत्तनिबद्धेषु विरचितत्वात् काव्यमिदं 'शतश्लोकी' नाम्नाऽपि परिचितम्। भगवत्याः पार्वतीदेव्याः तपस्यावर्णनं सौन्दर्यवर्णनं चास्य काव्यस्य विषयः। ततः प्रस्तुतपद्यान्यत्र उद्धृतानि।

---

शिवः शक्त्यायुक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥ १॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः संचिन्वन्विरचयति लोकानविकलम्।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुद्येनं भजति भसितोद्धूलनविधिम्॥२॥

अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी
जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥३॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-
स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया।
भयात् त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥४॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं
पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत्।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम्॥५॥

धनुः पौष्पं मौर्वी मधुकरमयो पञ्च विशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः।
तथाप्येकः सर्वं हिमगिरिसुते कामापि कृपा-
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ८॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि।
मनोऽपि भ्रूमध्ये सकलमपि भित्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥ ९॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि॥१०॥

***

**कठिनशब्दार्थाः**

१. शक्तिः - पार्वती।
२. विरिञ्चि - ब्रह्मा।
३. पङ्केरुहः - कमलम्।
४. शौरिः - विष्णुः।
५. स्मरः - मदनः।
६. मौर्वी - प्रत्यञ्चा।
७. कुलकुण्डम् - मूलाधारचक्रम्।
८. करिकलभः - गजस्य शावकः।
९. मिहिरः - सूर्यः।
१०. मकरन्दः - मधू

## ६. अग्निपुराणोक्तं सभदेकाव्यनिरूपणम्

**प्रस्तावनाः**

पुराणानि पञ्चमवेदरूपेण परिचितानि सन्ति। महर्षिणा व्यासेन अष्टादशपुराणानि लिखितानि। तेषु अग्निपुराणं साहित्यिकदृशा अत्यधिकं महत्त्वं बिभर्ति। अग्निपुराणस्य षट्सप्तत्युत्तरत्रिशताध्याये काव्यस्य लक्षणं तस्य भेदनिरूपणं च समागतम्। ततः अयं पाठः संकलितः।

---

**अथ काव्यादिलक्षणम्**

**अग्निरुवाच -**

काव्यस्य नाटकादेश्च अलङ्कारान्वदाम्यऽथ।
ध्वनिर्वर्णाः पदं वाक्यमित्येतद्वाङ्मयं मतम्॥१॥
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते।
शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता॥२॥
अभिधायाः प्रधानत्वात्काव्यं ताभ्यां विभिद्यते।
नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा॥३॥
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा।
व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः॥४॥
सर्वं शास्त्रमविद्वद्भिर्मृग्यमाणं न सिध्यति।
आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकः॥५॥
वर्गेषु वर्णवृन्दं स्यात्पदं सुप्तिङ्प्रभेदतः।
सङ्क्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली॥६॥
काव्यं स्फुटदलङ्कारं गुणवद्दोषवर्जितम्।
योनिर्वेदश्च लोकश्च सिद्धमन्नादयोनिजम् ॥७॥
देवादीनां संस्कृतं स्यात्प्राकृतं त्रिविधं नृणाम्।
गद्यं पद्यञ्च मिश्रश्च काव्यादि त्रिविधं स्मृतम्॥८॥



अपदः पदसन्तानो गद्यं तदपि गद्यते।
चूर्णकोत्कलिकागन्धिवृत्तभेदास्त्रिरूपकम्॥९॥
अल्पाल्पविग्रहं नातिमृदुसन्दर्भनिर्भरम्।
चूर्णकं नामतो दीर्घसमासात्कलिका भवेत्॥१०॥
भवेन्मध्यमसन्दर्भं नातिकुत्सितविग्रहम्।
वृत्तच्छायाहरं वृत्तसन्धिनैतत्किलोत्कटम्॥११॥
आख्यायिका कथा खण्डकथां परिकथा तथा।
कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा॥१२॥
कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात्।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः॥१३॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥१४॥
वक्त्रं वा परवक्त्रं वा यत्र साख्यायिका स्मृता।
श्लोकैः स्ववंशं संक्षेपात्कविर्यत्र प्रशंसति॥१५॥
मुख्यस्यार्थावताराय भवेद्यत्र कथान्तरम्।
परिच्छेदो न यत्र स्याद्भवेद्वा लम्बकैः क्वचित्॥१६॥
सा कथा नाम तद्गर्भे निबघ्नीयाच्चतुष्पदीम्।
भवेत्खण्डकथा यासौ यासौ परिकथा तयोः॥१७॥
अमात्यं सार्थकं वापि द्विजं वा नायकं विदुः।
स्यात्तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः॥१८॥
समाप्यते तयोर्नाद्या सा कथामनुधावति।
कथाख्यायिकयोर्मिश्रभावात्परिकथा स्मृता॥१९॥
भयानकं सुखपरं गर्भे च करुणो रसः।
अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका॥२०॥

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति त्रिधा।
वृत्तमक्षरसंख्येयमुक्थं तत्कृतिशेषजम्॥२१॥
मात्राभिर्गणानां यत्र सा जातिरिति काश्यपः।
सममर्द्धसमं वृत्तं विषमं पैङ्गलं त्रिधा॥२२॥
मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा।
श्रव्यञ्चेवाभिनेयञ्च प्रकीर्णं सकलोक्तिभिः॥२३॥

***

**कठिनशब्दार्थाः**

१. काव्यं - कवेः कर्म काव्यम्।
२. गद्यं - काव्यस्य एको भेदः।
३. कथा - गद्य काव्यस्य भेदः।
४. आख्यायिका - गद्य काव्यस्य भेदः।
५. विप्रलम्भः - वि + प्र + लम्भ्। शृङ्गार रसस्य भेदः।
यत्र नायिकानायकयोर्वियोगः वर्ण्यते तत्र विप्रलम्भशृङ्गाररसः।
६. पैङ्गलम् - पिङ्गलाचार्यस्य इदम्। पिङ्गलाचार्यस्य छन्दःसूत्राणि प्रसिद्धानि।

***



## ७. वसन्तवर्णनम्

**प्रस्तावना**

भुवनप्रथितः कविताकामिनीललामभूतः महाकविः कालिदासः संस्कृतसाहित्ये सुविदित एव। अस्य कवेः कीर्तिः निखिलभुवनमण्डले सततं राजत इत्यत्र नास्ति काचित् संशीतिः। कालिदासस्य समयः ख्रिस्ताब्दपूर्वद्वितीय-शतकादारभ्य ख्रिस्ताब्दचतुर्थशतकस्यान्तराले विद्यत इति विदुषामभिमतम्। महाकवेरस्य सप्तकृतयः सुप्रथिताः। एतासु कृतिषु 'ऋतुसंहारम्' इति रचना महाकवेः आद्या कृतिरिति मन्यते। अस्मिन् काव्ये ग्रीष्मऋतुमारभ्य वसन्तऋतुं यावत् षण्णामृतूनां सम्यग् वर्णनं विद्यते। चतुश्चत्वारिंशदधिकैकशतं पद्यानि षट्सर्गाश्चात्र विद्यन्ते। तत्र षष्ठे सर्गे वसन्तर्तोः वर्णनं चारु कृतम्। तमेवांशं स्वीकृत्य 'वसन्तवर्णनम्' इति नामकोऽयं पाठः वर्तते। पाठेऽस्मिन् कालिदासेन वासन्तिकं वैभवं वर्णितमस्ति।

---

प्रफुल्लचूताङ्कुरतीक्ष्णसायो द्विरेफमालाविलसद्धनुर्गुणः।
मनांसि वेद्धुं सुरतप्रसङ्गिनां वसन्तयोद्धा समुपागतः प्रिये॥१॥
द्रुमाः सपुष्पाः सलिलं सपद्मं स्त्रियः सकामाः पवनः सुगन्धिः।
सुखाः प्रदोषा दिवसाश्च रम्याः सर्वं प्रिये चारुतरं वसन्ते॥२॥
वापीजलानां मणिमेखलानां शशाङ्कभासां प्रमदाजनानाम्।
चूतद्रुमाणां कुसुमान्वितानां ददाति सौभाग्यमयं वसन्तः॥३॥
कुसुम्भरागारुणितैर्दुकूलैर्नितम्बबिम्बानि विलासिनीनाम्।
रक्तांशुकैः कुङ्कुमरागगौरैरलंक्रियन्ते स्तनमण्डलानि॥४॥
कर्णेषु योग्यं नवकर्णिकारं चलेषु नीलेष्वलकेष्वशोकम्।
पुष्पं च फुल्लं नवमल्लिकायाः प्रयाति कान्तिं मदाजनानाम्॥५॥
स्तनेषु हाराः सितचन्दनार्द्रा भुजेषु सङ्गं वलयाङ्गदानि।
प्रयान्त्यनङ्गातुरमानसानां नितम्बिनीनां जघनेषु काञ्च्यः॥६॥
सपत्रलेखेषु विलासिनीनां वक्त्रेषु हेमाम्बुरुहोपमेषु।
रत्नान्तरे मौक्तिकसङ्गरम्यः स्वेदागमो विस्तरतामुपैति॥७॥

उच्छ्वासयन्त्यः श्लथबन्धनानि गात्राणि कंदर्पसमाकुलानि।
समीपवर्तिष्वधुना प्रियेषु समुत्सुका एव भवन्ति नार्यः॥८॥

तनूनि पाण्डूनि समन्थराणि मुहुर्मुहुर्जृम्भणतत्पराणि।
अङ्गान्यनङ्गः प्रमदाजनस्य करोति लावण्यससंभ्रमाणि॥९॥

नेत्रेषु लोलो मदिरालसेषु गण्डेषु पाण्डुः कठिनः स्तनेषु।
मध्येषु निम्नो जघनेषु पीनः स्त्रीणामनङ्गो बहुधा स्थितोऽद्य॥१०॥

अङ्गानि निद्रालसविभ्रमाणि वाक्यानि किंचिन्मदलालसानि।
भ्रूक्षेपजिह्मानि च वीक्षितानि चकार कामः प्रमदाजनानाम्॥११॥

प्रियङ्गुकालीयककुङ्कुमाक्तं स्तनेषु गौरेषु विलासिनीभिः।
आलिप्यते चन्दनमङ्गनाभिर्मदालसाभिर्मृगनाभियुक्तम्॥१२॥

गुरूणि वासांसि विहाय तूर्णं तनूनि लाक्षारसरञ्जितानि।
सुगन्धिकालागुरुधूपितानि धत्ते जनः काममदालसाङ्गः॥१३॥

पुंस्कोकिलश्चूतरसासवेन मत्तः प्रियां चुम्बति रागहृष्टः।
कूजद्द्विरेफोऽप्ययमम्बुजस्थः प्रियं प्रियायाः प्रकरोति चाटु॥१४॥

ताम्रप्रवालस्तवकावनम्राश्चूतद्रुमाः पुष्पितचारुशाखाः।
कुर्वन्ति कामं पवनावधूताः पर्युत्सुकं मानसमङ्गनानाम्॥१५॥

आमूलतो विद्रुमरागताम्रं सपल्लवाः पुष्पचयं दधानाः।
कुर्वन्त्यशोका हृदयं सशोकं निरीक्ष्यमाणा नवयौवनानाम्॥१६॥

मत्तद्विरेफपरिचुम्बितचारुपुष्पा मन्दानिलाकुलितनम्रमृदुप्रवालाः।
कुर्वन्ति कामिमनसां सहसोत्सुकत्वं चूताभिरामकलिकाः समवेक्ष्यमाणाः॥१७॥

कान्तामुखद्युतिजुषामपि चोद्गतानां शोभां परां कुरबकद्रुममञ्जरीणाम्।
दृष्ट्वा प्रिये सहृदयस्य भवेन्न कस्य कंदर्पबाणपतनव्यथितं हि चेतः॥१८॥

आदीप्तवह्निसदृशैर्मरुतावधूतैः सर्वत्र किंशुकवनैः कुसुमावनम्रैः।
सद्यो वसन्तसमये हि समाचितेयं रक्तांशुका नववधूरिव भाति भूमिः॥१९॥

किं किंशुकैः शुकमुखच्छविभिर्न भिन्नं किं कर्णिकारकुसुमैर्न कृतं नु दग्धम्।
यत्कोकिलः पुनरयं मधुरैर्वचोभिर्यूनां मनः सुवदनानिहितं निहन्ति॥२०॥

पुंस्कोकिलैः कलवचोभिरुपात्तहर्षैः कूजद्भिरुन्मदकलानि वचांसि भृङ्गैः।



लज्जान्वितं सविनयं हृदयं क्षणेन पर्याकुलं कुलगृहेऽपि कृतं वधूनाम्॥२१॥

आकम्पयन्कुसुमिताः सहकारशाखा विस्तारयन्परभृतस्य वचांसि दिक्षु।
वायुर्विवाति हृदयानि हरन्नराणां नीहारपातविगमात्सुभगो वसन्ते॥२२॥

कुन्दैः सविभ्रमवधूहसितावदातैरुद्द्योतितान्युपवनानि मनोहराणि।
चित्तं मुनेरपि हरन्ति निवृत्तरागं प्रागेव रागमलिनानि मनांसि यूनाम्॥२३॥

आलम्बिहेमरसनाः स्तनसक्तहाराः कंदर्पदर्पशिथिलीकृतगात्रयष्ट्यः।
मासे मधौ मधुरकोकिलभृङ्गनादैर्नार्यो हरन्ति हृदयं प्रसभं नराणाम्॥२४॥

नानामनोज्ञकुसुमद्रुमभूषितान्तान्हृष्टान्यपुष्टनिनदाकुलसानुदेशान्।
शैलेयजालपरिणद्धशिलातलौघान्दृष्ट्वा जनः क्षितिभृतो मुदमेति सर्वः॥२५॥

नेत्रे निमीलयति रोदिति याति शोकं घ्राणं करेण विरुणद्धि विरौति चोच्चैः।
कान्तावियोगपरिखेदितचित्तवृत्तिर्दृष्ट्वाध्वगः कुसुमितान्सहकारवृक्षान्॥२६॥

समदमधुभराणां कोकिलानां च नादैः कुसुमितसहकारैः कर्णिकारैश्च रम्यः।
इषुभिरिव सुतीक्ष्णैर्मानसं मानिनीनां तुदति कुसुममासो मन्मथोद्वेजनाय॥२७॥

आम्रीमञ्जुलमञ्जरीवरशरः सत्किंशुकं यद्धनु-
र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम्।
मत्तेभो मलयानिलः परभृतो यद्बन्दिनो लोकजि-
त्सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः॥२८॥

***

**कठिनशब्दार्थाः**

| | |
|---|---|
| १. चूतः - आम्रवृक्षः। | २. द्विरेफ - भ्रमरः। |
| ३. दुकूलम् - वस्त्रम्। | ४. गात्रम् - शरीरम्। |
| ५. वक्त्रम् - मुखम्। | ६. कंदर्पः - मन्मथः। |
| ७. वासांसि - वस्त्राणि। | ८. पर्याकुलम् - व्याकुलम्। |
| ९. परभृतः - कोकिलः। | १०. सुभगं - सुन्दरम्। |
| ११. सितं - धवलम्। | १२. यूनाम् - युक्कानाम्। |
| १३. हेमम् - सुवर्णम्। | १४. विरौति - रोदिति। |
| १५. तुदति - पीडयति। | १६. कुसुममासः - वसन्तः। |
| १७. मत्तेभः - उन्मत्तगजः। | |

# ८. गीतगोविन्दम्

**प्रस्तावना**

स्वीकृतं गीतमिदं जयदेवस्य 'गीतगोविन्दम्' इति काव्यात् स्वीकृतं वर्तते। मधुरकोमलकान्तपदावलीनिर्माणरसिकरूपेण जयदेवः प्रसिद्धः। जयदेवः लक्ष्मणसेननामकस्य वङ्गीयस्य राज्ञः सभायामासीत्। द्वादशशतकस्य आरम्भकाले अयं जातः। गीतगोविन्दं द्वादशसर्गात्मकं खण्डकाव्यम्। यद्यपि सर्वथा इदं काव्यकोटौ नायाति यतोऽत्र चरितं न वर्ण्यते, अथापि वर्णनपरकखण्ड-काव्यत्वमस्य स्वीकर्त्तव्यमेव। केचिद् आधुनिकास्तु गीतगोविन्दं गीतिनाट्यं मन्यन्ते। गीतगोविन्दं शुद्धगीति-काव्यशुद्धनाट्ययोरन्तरे वर्तते, यद्यपीदं द्वादशशताब्द्यां निर्मितं, तथापि सम्प्रत्यापि वङ्गेषु तदीया परम्परा नाट्यरूपेण जीवति। गीतगोविन्दस्य द्वादशापि सर्गाः गीतमयाः। सर्गाणां कथा परस्परं योजयितुं केचन श्लोका अपि सन्ति। सरसमधुरकवितायाः पराकाष्ठा अत्र निदर्शिता। भक्तेः सरसकवितायाश्च एकत्र समावेशः यथा गीतगोविन्दे न तथा क्वापि अन्यत्र इति स्वयमुक्तं जयदेवेन।

---

जय जगदीश हरे ॥धृ.॥

प्रलयपयोधिजले धृतवानसि वेदम्।
विहितवहित्रचरित्रमखेदम्॥
केशव धृतमीनशरीर।
जय जगदीश हरे ॥१॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे।
धरणिधरणकिणचक्रगरिष्ठे॥
केशव धृतकच्छपरूप।
जय जगदीश हरे ॥२॥

वसति दशनशिखरे धरणी तव लग्ना।
शशिनि कलङ्ककलेव निमग्ना॥
केशव धृतसूकररूप।
जय जगदीश हरे ॥३॥



तव करकमलवरे नखमद्भुतशृङ्गं।
दलितहिरण्यकशिपुतनुभृङ्गम्॥
केशव धृतनरहरिरूप।
जय जगदीश हरे ॥४॥

छलयसि विक्रमणे बलिमद्भुतवामन।
पदनखनीरजनितजनपावन॥
केशव धृतवामनरूप।
जय जगदीश हरे ॥५॥

क्षत्रियरुधिरमये जगदपगतपापं।
स्नपयसि पयसि शमितभवतापम्॥
केशव धृतभृगुपतिरूप।
जय जगदीश हरे ॥६॥

वितरसि दिक्षु रणे दिक्पतिकमनीयम्।
दशमुखमौलिबलिं रमणीयम्॥
केशव धृतरघुपतिरूप।
जय जगदीश हरे ॥७॥

वहसि वपुषि विशदे वसनं जलदाभं।
हलहतिभीतिमिलितयमुनाभम्॥
केशव धृतहलधररूप।
जय जगदीश हरे ॥८॥

निन्दसि यज्ञविधेरहह श्रुतिजातं।
सदयहृदयदर्शितपशुघातम्॥
केशव धृतबुद्धशरीर।
जय जगदीश हरे ॥९॥

म्लेच्छनिवहनिधने कलयसि करवालम्।
धूमकेतुमिव किमपि करालम्॥
केशव धृतकल्किशरीर।
जय जगदीश हरे ॥१०॥
श्रीजयदेवकवेरिदमुदितमुदारं।
शृणु सुखदं शुभदं भवसारम्॥
केशव धृतदशविधरूप।
जय जगदीश हरे ॥११॥
वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्वते॥
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥१२॥

***

**कठिनशब्दार्थाः**

| | |
|---|---|
| १. मीनः - मत्स्यः | २. पयोधिः - समुद्रः |
| ३. क्षितिः - पृथिवी | ४. किणः - चिम् |
| ५. दशनं - दन्तः | ६. तनुः - शरीरम् |
| ७. विक्रमणे - पराक्रमे | ८. नीरं - जलम् |
| ९. रुधिरं - रक्तं | १०. भवतापं - पापम् |
| ११. भृगुपतिः - परशुरामः | १२. रणे - युद्धे |
| १३. मौलिः - शिरः | १४. रघुपतिः - श्रीरामः |
| १५. वपुः - शरीरम् | १६. वसनं - वस्त्रम् |
| १७. हलधरः - बलरामः | १८. श्रुतिः - वेदः |

***



# ९. प्रियप्रेमोन्मादः

**प्रस्तावना**

सन्तपरम्परेति भारतदेशस्य वैशिष्ट्यम्। तत्रापि महाराष्ट्रम् अग्रक्रमेण विद्यते। ज्ञानेश्वर-नामदेव-तुकारामादयः भक्तिरसस्य प्रणेतारः इत्युच्यते चेत् न तत्र संशयलेशः। एतैः सरलया भाषया भारतीयतत्त्वज्ञानं सामान्यजनेषु प्रसृतम्। ज्ञानेश्वरः परम्परायाः अस्याः आद्यप्रवर्तकः। तादृशेषु अन्यतमः गुलाबरावमहाराजः। ख्रिस्ताब्दे १८८१ तमे वर्षे विदर्भप्रदेशे अयं गुलाबरावमहाराजः जनिम् अलभे। अनेन बहुविधसाहित्यं विरचितमस्ति। तत्र हि २५०० 'अभङ्गाः' इति प्रसिद्धभक्तिकाव्यानि। २३००० सङ्ख्यात्मकानि 'ओवी' इति गीतानि। सहस्रश्लोकरचना तथा च २५०० सङ्ख्यात्मकानि 'पद' इति नामधेययुक्तानि गीतानि २० यष्ट्यां सन्ति।

'मधुराभक्तिः' इति अस्य गुलाबरावमहोदस्य भक्तिक्षेत्रे योगदानम्। अद्वैतेन सह भक्तिं विनियोज्य मधुराद्वैतसम्प्रदायस्य स्थापनामकरोत् सः। सर्वसम्प्रदायेषु उल्लिखितानि तत्त्वानि एकत्रीकृत्य समन्वयात्मकं तत्त्वछत्रं महाराजेन प्रदत्तम्। तदैव मधुराद्वैतसम्प्रदायनाम्ना विख्यातम्।

भक्तिरसस्य माहात्म्यं प्रतिपादयति महाराजस्य लघुकाव्यं 'प्रियप्रेमोन्मादः' इति। १७ सङ्ख्यात्मकाः श्लोकाः काव्येऽस्मिन् वरीवर्ति। काव्येऽस्मिन् विरोधालङ्कारमाध्यमेन विरहभक्तेः सुमधुराविष्कारः महाराजेन प्रकटीकृतः। महाराजस्य मधुरतत्त्वज्ञानस्य सम्पूर्णं रसमाधुर्यमत्र युगपदेव अस्माभिः दृश्यते।

प्रेम्णः दशदशाः - चिन्ता, जागरणम्, उद्वेगः, तनुता, मलिनाङ्गता, प्रलापः, व्याधिः, उन्मादः, मोहः तथा च मृत्युश्चेति। तासु उन्मादावस्थायाः वर्णनमस्मिन् लघुकाव्ये विहितमस्ति। भक्तेः अतिशायित्वम् उन्माद इव वर्तते। अस्य भक्तिरसपूर्णं वर्णनमत्र दृश्यते।

---

॥ श्रीज्ञानेश्वर माऊली समर्थ ॥

शब्दो निरुद्धो बाष्पैर्वा निरुद्धे नयनेऽश्रुभिः।
निरुद्धं कर्म मोहेनाऽलं प्रियनमस्कृतिः॥१॥
अहो वह्निता गंगा संगता मेघसागरम्।
शैत्यं त्यक्त्वा दीनमीनः महातापेन जीवति॥२॥

चित्रं बत निरिच्छस्य गृहे कल्पतरुः स्थितः।
कुहकात् यञ्चिता येन साभिलाषजना वृथा॥३॥

माऽऽगच्छ मधुप त्वं मे हृतः सर्वो रसस्त्वया।
सुसेवायां प्रभूतायां पुनर्मा पीडयिष्यसि॥४॥

मयैव काञ्चन लब्धं विश्वं चोरविवर्जितम्।
स्वेच्छया तत्संस्करोमि कटकं वाथ कुंडलम्॥५॥

तदेव राज्यं त्यागार्हं न यस्मिन् दुःखिताः प्रजाः।
यत्र नार्यो न शोचन्ति तदेकं शून्यमन्दिरम्॥६॥

जयोऽस्माकं यदा जातः किं तदाऽऽगमनं तव।
प्रशंसार्ह भवेन्नाथ दयालोर्दीनवञ्चनम्॥७॥

किं तेऽथ दर्शनानन्दो दृष्टिरेव हृता त्वया।
किं पीयूषप्रसादेन मृतिकैवल्यमानिनः॥८॥

अहो मूकः श्रुतिं ब्रूते पण्डितो मौनमास्थितः।
यः पश्यति स एवान्धो यो न पश्येत्स पश्यति॥९॥

नैन जानामि संस्थाप्यः कायमद्य स्यमन्तकः।
अस्यैव चिन्तया भग्नं हृदयं मे सहस्रधा॥१०॥

अन्यां याहि शिवं तेऽस्तु हा हा चञ्चल मुञ्च माम्।
सुखेन वस भो स्वामिन् यत्र ते रमते मनः॥११॥

पितृघातकरी नाहं न चाहं व्यभिचारिणी।
कथं साधनहीनायां नाथ मय्यनुकंपसे॥१२॥

हृद्रदस्यातुरः प्राह रसचूर्णं महौषधम्।
आरोग्यं विरहाह्लादः पुष्टिस्ते त्वय्यपस्मृतिः॥१३॥

सर्वत्र विरहस्ते त्वं मूर्तिं दर्शय ते मम।
व्यष्टिमूर्त्यलिंगने मे नाथ वांच्छा न विद्यते॥१४॥



तवैक्यं त्वद्वियोगं वा हृदयं नैव मुञ्चति।
भिन्नयोरुभयोर्योगो यत्नं तस्मात्परित्यज॥१५॥

न चिताराहुणा यावत् ग्रस्तो वदनचन्द्रमाः।
तावन्न विद्यते पर्व प्रियायासुसमर्पणे॥१६॥

हा नाथ रमण प्रेष्ठ क्वासि दीनदयानिधे।
दास्यास्ते कृपणाया मे पादयुग्मं प्रदर्शय॥१७॥

***

**कठिनशब्दार्थाः**

१. मधुपः - भ्रमरः।
२. पीयूषः - अमृतम्।
३. स्यमन्तकः - रत्नविशेषः।
४. सहस्रधा - सहस्रवारम्।

# १०. कण्टकाञ्जलिः

**प्रस्तावना**

राष्ट्रपतिपुरस्कारेण सम्मानितः प्रा. कृष्ण श्री. अर्जुनवाडकर-महोदयः संस्कृत-अर्धमागधी-मराठी भाषासाहित्यस्य प्राध्यापकरूपेण महाराष्ट्रदेशे सुपरिचितः। तत्रभवतो विडम्बनपरं कण्टकाञ्जलिरित्याख्यं संस्कृतवाङ्मयाधृतं काव्यम्। कण्टकार्जुन इत्यस्य काव्यस्य अपरनाम्ना ख्यातिः सर्वपरिचिता। समाजे वर्तमानानां कुरीतीनां प्रथानां च अनौचित्यपरं काव्यमिदं शार्दूलविक्रीडितच्छन्दसि निबद्धम्। ततः पद्यांशोऽयं उद्धृतः।

---

**कण्टकाः**

केयं व्याकुलता 'तुदेयु' रिति न क्षिण्वन्त्यमी कण्टकाः,
काव्यज्ञान् विबुधान् अलौकिकरसं दृष्ट्वैव तृप्यन्ति ये।
ये चाप्युन्नतकन्धराः पृथुपदाःपूर्णप्रशस्तोदराः,
दुष्प्रेक्ष्याश्चिरकण्टकप्रणयिनः, तेषामलं चिन्तया॥१॥

**कण्टकक्वाथः**

सारङ्गाः कमलानि भृङ्गकरिणौ शृङ्गारशान्तौ रसौ,
रक्षांस्यप्परसो नृपा रतिरणा हंसाः सरो मानसम्।
चर्वन्त्यास्तव वाणि ! कालममितं याऽरोचकग्रस्तता,
सा नश्यत्विति कण्टकैरभिनवः क्वाथोऽयमायोजितः॥२॥

**अश्वत्थवृक्षः**

ऊर्ध्वं मूलमधश्च यस्य वितताः शाखाः सुवर्णच्छदः,
कस्योत्कोचतरुर्जगत्यविदितः, यद्यप्यरूपोऽगुणः?
छेत्ता कश्चिदुदेति संसृतितरोः, छेत्तास्य वृक्षस्य तु,
नाभूत, नास्ति, न वा भविष्यति पुमान् ! अश्वत्थ एषोऽक्षयः॥३॥

**चित्रगुप्तः**

न्यायार्थं भुवि यां श्रयन्ति सरणीं शिष्टा जनाः नारदात्,
श्रुत्वा तां परमादरेण विषये स्वे चित्रगुप्तः श्रितः।



नास्म्येवाहमसौ इति प्रतिवचः श्रुत्वा परं पापिनां
स्वे कर्मण्यनुतप्त एष विवशः कूटान् व्यधात् साक्षिणः॥४॥

**ग्रन्थप्रकाशनम्**

ग्रन्था हि द्विविधाः-प्रकाशकधनं ये वर्धयन्त्यक्षयं,
कार्श्यं ये च नयन्ति ते हि विदिताः पाठ्यादि-शास्त्रादयः।
वृद्ध्यै चेत् किल यः प्रकाशककृतः; लोकस्य कार्श्याय चेत्;
तादृग्ग्रन्थमणिप्रकाशनविधेर्ज्ञाः केवलं शासकाः॥५॥

**वृक्षारोपणम्**

'रोप्यन्तां तरवो गृहे गृहे' इति श्रुत्वा वचो मन्त्रिणाम् ,
अस्माभिर्गृहसंनिधौ प्रणिहितो जान्यो रसालस्तरुः।
कालेनाभवदास्पदं (सह शिलाखण्डैः) फलानामसौ,
लोकास्तस्य फलं (शिला अपि वयं) भुक्त्वा गता निर्वृतिम्॥६॥

**निर्वाचनसूक्तम्**

काले वर्षतु माऽतिवर्षतु घनः, भूमिश्च मा कम्पतां,
दत्तां क्षेत्रमकृष्टमेव हि फलं, स्यादश्रमं वेतनम्।
स्त्रीणां सुप्रसवोऽस्त्वगर्भवहनं, मा भूच्च मृत्योर्भयं,-
प्राप्तुं सर्वमिदं यदीच्छथ ततो मह्यं मतं दीयताम्॥७॥

***

**कठिनशब्दार्थाः**

१. विबुधान् - विदुषः, (पक्षे) देवान्। 'देवा हि अमृतं दृष्ट्वैव तृप्यन्ति'। इति आगमोक्तेः। उन्नतकन्धराः पृथुपदाः पूर्णप्रशस्तोदराः दुष्प्रेक्ष्याश्चिरकण्टकप्रणयिनः = उष्ट्राः।

२. 'ऊर्ध्वमूलमधः शाखम्' इत्यादिना संसारवृक्षं विवृण्वती भगवती गीता मां क्षम्यताम्। एतत् पद्यम् उत्कोचनिर्मूलनमन्त्रिणेऽर्पितमस्ति।

३. प्रकाशककृतः-प्रकाशकस्य।

***

